व्याजहार च राजानं स्वामिन्दूतो ऽयमागतः ।
दिशो ऽवलोक्य राजापि प्रोचे किं नेह दृश्यते ॥९६॥
राज्ञ्यथादर्शयद्राज्ञः पलितं मूर्ध्न्युवाच च ।
प्राप्तेष केशपाशे ऽयं प्रशस्तो धर्मदौत्यकृत् ॥९७॥
तृतीयवयसः शस्त्रमिव यौवनघातकम् ।
तन्मूर्ध्नि पलितं दृष्ट्वा राजा दुरमनायत ॥९८॥
अभ्यधाद्वारिणी देव किं वृद्धत्वेन लज्जसे ।
अप्येकं पलितं दृष्ट्वा यदेवं दुर्मनायसे ॥९९॥
पटहोद्घोषणां कृत्वा लोकः सर्वो निषेत्स्यते ।
न यथा वृद्धभावं ते वार्तयापि प्रकाशयेत् ॥१००॥
राजा प्रोवाच बिभेमि नाहं पलितदर्शनात् ।
दौर्मनस्ये पुनरिदं कारणं जीवितेश्वरि ॥१०१॥
अदृष्टपलितैरस्मत्पूर्वजैरादृदे व्रतम् ।
अहं [illegible] विषयासक्तः स्थितः पलितवानपि ॥१०२॥
अहमद्याय गच्छामि व्रतमेवं स्थिते ऽपि हि ।
किं [illegible] दुःखसुखे राज्ये राज्यमारोप्यते कथम् ॥१०३॥
यदा मे व्रतमादिष्टोः किं राज्येन सुतेन किम् ।
धीमति व्रतमादास्ये त्वं स्वं संवर्धयात्मजम् ॥१०४॥
धारिण्यभिदधे नाहं त्वां विना स्यामुमीश्वरी ।
स्त्रियः पत्यनुयायिन्यः समये यत्र तत्र वा ॥१०५॥

---

96 a A विलोक्य। 97 d B धूम०। 98 d B दूर० 99 d A यदैवं [illegible] यदेवं। 100 a B केवलं। 102 d A पलितवानपि। 105 c C समये।

तद्बाले ऽपि सुते राज्यं निदधीथा अहं पुनः ।
शुश्रूषिष्ये वने ऽपि त्वां देहच्छायेव पार्श्वगा ॥१०६॥
अरण्यजस्तरुरिव सुतः स्वैरेव कर्मभिः ।
प्रसन्नचन्द्रो बालो ऽपि वर्धतां तेन किं मम ॥१०७॥
सोमचन्द्रस्ततो राज्यमारोप्य तनुजन्मनि ।
दिक्प्रोषितस्तापसो ऽभूत्पत्न्या धात्र्या च संयुतः ॥१०८॥
स आश्रमपदं किंचिच्चिरशून्यमशिश्रयत् ।
दुस्तपं च तपस्तेपे शुष्कपत्रादिभोजनः ॥१०९॥
पलाशपत्राण्यादाय स आश्रमकुटीं व्यधात् ।
मृगाणामध्वगानां च शीतच्छायामृतप्रपाम् ॥११०॥
स्वादुस्वादून्युदकानि वनस्पतिफलानि च ।
सोमेन्दुरानयत्पत्न्यै स्यूतस्तोमतन्तुभिः ॥१११॥
तत्रापि धारिणी सा तु पत्यावत्यन्तभक्तिभाक् ।
तल्पं प्रकल्पयामास तदर्थे कोमलैस्तृणैः ॥११२॥
तत्रेङ्गुदानि पक्वानि पेषं पेषं च धारिणी ।
स्नेहं जग्राह दिवसे चक्रे च निशि दीपकान् ॥११३॥
अरण्यगोमयैरार्द्रैः सा लिलेपाश्रमाङ्गणम् ।
पत्युः सुखासिकाहेतोर्मार्जयामास चान्वहम् ॥११४॥
तत्राश्रमे दम्पती तौ लालयन्तौ मृगार्भकान् ।
तपःकष्टमजानन्तौ कंचित्कालं व्यतीयतुः ॥११५॥

---

108 c A शोचित । 109 a B स्त्रमा स चाश्रमं किं चि° । 111 c C स्पष्टे ।
114 a A चारण्य, C चरण्यैर्मै । 115 d A किचित्, D sec. m.

सन्तोषसुखधारिण्या धारिण्याः पूर्वसम्भवः ।
तत्र क्रमेण ववृधे गर्भो ऽनुत्पादितव्यथः ॥११६॥
धारिण्याः सूनुरन्यूनलक्षणः सुषुवे ऽन्यदा ।
कान्त्या दीप इवातैलपूरो ऽन्तःसूतिकागृहम् ॥११७॥
आश्रमे वल्कलान्येवेत्यवेष्ट्यत स वल्कलैः ।
पित्रा वल्कलचीरीति ततस्तन्नाम कल्पितम् ॥११८॥
विपेदे धारिणी सूतिरोगेण तनयः पुनः ।
अदृष्टमातृकः सो ऽभ्मुमानिव निरन्तरः ॥११९॥
अरण्यमहिषीक्षीरं पाययित्वा मुहुर्मुहुः ।
सोमेन्दुरार्पयद्धात्र्या धारणाय तमर्भकम् ॥१२०॥
अथाप सापि पञ्चत्वं कालेन कियतापि हि ।
धात्री दैववशेनानुयियासुरिव धारिणीम् ॥१२१॥
अपीप्यन्महिषीक्षीरं सोमेन्दुस्तं शिशुं स्वयम् ।
यान्निषण्णः शयानो वा स्वयमङ्के दधार च ॥१२२॥
स क्रमाद्वर्धमानो ऽभूत्पादचंक्रमणक्षमः ।
चक्रे च प्रत्यहं पांसुक्रीडां वनमृगार्भकैः ॥१२३॥
एधोभिः स्वयमानीतैर्नीवारैः स्वयमाहृतैः ।
स्वयं रसवतीं कृत्वा सोमेन्दुस्तमभोजयत् ॥१२४॥
वनधान्यैर्वनफलैः पोषं पोषं तमर्भकम् ।
सोमचन्द्रो व्यधादात्मसखं तपसि दुस्तपे ॥१२५॥
यौवनाभिमुखश्चासद्धर्मिणः सर्वकर्मसु ।

---

120 d C धरणाय, B धारणीय। 123 b D चक्रमणे। 125 d C दुष्ये।

पितृचर्याप्रवीणो ऽभूदय वल्कलचीर्यपि ॥१२६॥
फलाद्यानयनैर्नित्यमङ्गसंवाहनेन च।
शुश्रूषां स पितुश्चक्रे सा हि सर्वव्रतोत्तमा ॥१२७॥
आजन्मब्रह्मचार्येव व्रती वल्कलचीर्यभूत्।
स्त्रीणां नामापि नाज्ञासीदस्मिंल्लोके निवसन्वने ॥१२८॥
प्रसन्नचन्द्रः शुश्राव वनस्थस्तान्यदा पितुः।
धारिणीकुक्षिसंभूतं सुतं सोदरमात्मनः ॥१२९॥
कीदृशो ऽस्ति स मे भ्राता मिलिष्यति कथं पुनः।
इत्यभूद्रणरणको राज्ञो मनसि दुर्धरः ॥१३०॥
अथादिशच्चित्रकरांस्तत्र यात तपोवने।
यच्छ्रीमत्तातपादानां पादपद्मैरलङ्कृतम् ॥१३१॥
पितृपादाब्जहंसस्य मदीयस्यानुजन्मनः।
वने निवसतो रूपमालिख्यानयत द्रुतम् ॥१३२॥ युग्मम्॥
प्रमाणमादेश इति प्रोच्य चित्रकरा अपि।
ययुस्तत्र वने पुण्यीकृते वल्कलचीरिणा ॥१३३॥
ते विश्वकर्मणो मूर्त्यन्तराणीवातिकौशलात्।
समालिखन्यथावस्थमादर्शप्रतिबिम्बवत् ॥१३४॥
आनीय दर्शयामासू रूपं वल्कलचीरिणः।
ते चित्रकारिणो राज्ञः सुधावर्तिनिभं दृशोः ॥१३५॥
दध्यौ नृपस्तदाकृत्या मत्पितुर्नैव हीयते।
आत्मा वै जायते पुत्रः श्रुतिरेषा हि नान्यथा ॥१३६॥

128 a C चर्येन। 130 b D मिलष्यति। 131 d A पदपद्मे। 132 युग्मं not in C। 134 d D चादर्शे। 135 d A सुधावार्ये।

दिष्ट्या सोदर दृष्टो ऽसीत्यभिधायासकृन्नृपः ।
तं सस्वजे मूर्ध्नि जघ्रौ न चाङ्कादुदतारयत् ॥१३७॥
वल्कलाच्छादनधरं दृष्ट्वा वल्कलचीरिणम् ।
उदश्रुर्दृग्गलद्राजा सनिर्झर इवाचलः ॥१३८॥
ऊचे च प्रवयास्तातो युक्तमाचरतु व्रतम् ।
मद्भ्रातुस्तस्य बालस्य वनवासो ऽपि नार्हति ॥१३९॥
अहं राज्यसुखह्रदे मग्नः क्रीडामि हंसवत् ।
पुलिन्द इव मे भ्राता वनवृत्त्यानुजीवति ॥१४०॥
अरण्यजो जीव इव दुरानेयः स पत्तने ।
कथं तु मम राज्ये ऽपि तस्मिन्राज्याविभागिनि ॥१४१॥
समकष्टमिति भ्रातुरनुशोचन्महीपतिः ।
एवमाज्ञापयामास वेश्याश्चातुर्यशालिनीः ॥१४२॥
मुनिवेषेण गत्वाङ्गस्पर्शैर्नवनवोक्तिभिः ।
प्रलोभ्य खाण्डैश्च फलैरिहानयत मे ऽनुजम् ॥१४३॥
इति राजाज्ञया वेश्या मुनिवेषभृतो द्रुतम् ।
तदाश्रमपदं जग्मुः सोमचन्द्रेण सेवितम् ॥१४४॥
फलान्यादाय बिल्वादीन्यायान्तमृषिपुत्रकम् ।
वल्कलाच्छादनं तत्र ददृशुस्ता मृगीदृशः ॥१४५॥
मुनिवेषभृतां तासां सो ऽकार्षीदभिवादनम् ।
ऋजुधीरित्यपृच्छच्च के यूयं को व आश्रमः ॥१४६॥

---

140 c A पुलिन्दः। 141 c D राज्यविभागिनि। 143 c C खंडैश्च।
145 d C °दृशम्°।

ताः प्रोचुर्वयमृषयः पोतनाश्रमवासिनः ।
तत्रागताः स्मो ऽतिथयः किमातिथ्यं करिष्यसि ॥१४७॥
उवाच स फलान्येतान्याहृतानि मया वनात् ।
यूयमश्नीत पक्वानि मधुराणि महर्षयः ॥१४८॥
तास्त्वोचुराश्रमपदे ऽस्मदीये नेदृशान्यहो ।
फलानि कश्चिदश्नाति नीरसान्यतिनीरसः ॥१४९॥
अस्मदाश्रमवृक्षाणामीक्षस्व फलवर्णिकाम् ।
इत्युक्त्वा ता निपेतुर्दुमूले तं च न्यपादयन् ॥१५०॥
तास्तं प्राशयन्खण्डफलान्यविफलाशयाः ।
सो ऽपि सद्यस्तदास्वादाद्विलासुद्वेगभागभूत् ॥१५१॥
एकस्थानस्थितं तास्तं स्वाङ्गस्पर्शमचीकरन् ।
तत्करं च न्यधुः पीनकुचकुम्भे निजोरसि ॥१५२॥
स ऊचे कोमलमिदं किमङ्गं वो महर्षयः ।
किमुन्नते स्थले एते यौष्माकीणे च वक्षसि ॥१५३॥
ताः प्रोचुस्तं स्पृशन्त्यः स्वैः कोमलैः पाणिपल्लवैः ।
अस्मद्वनफलास्वादे हीदृक् स्यादङ्गमार्दवम् ॥१५४॥
आस्वादितैर्वनफलैरस्मदीयैर्महारसैः ।
अत्यन्तोपचयादेते जायेते हृदि च स्थले ॥१५५॥
तद्विमुंचाश्रममिममसाराणि फलानि च ।
फलाद्याश्रमसारा वा त्वमपश्याद्दृशो ऽत्र ॥१५६॥

148 a A स उवाच, C उवाच च। 153 a B कोमलमिति। 153 c D यैते। 153 d B वर्त्तसि। 154 c A चस्मिन्।

अथ खण्डफलास्वादलुब्धो वल्कलचीर्यपि ।
सङ्केतमग्रहीन्मुग्धस्ताभिः सह यियासया ॥१५७॥
संस्थाप्य तापसभाण्डमागाद्वल्कलचीर्यपि ।
यथोदितं च सङ्केतस्थानं ताभिरधिष्ठितम् ॥१५८॥
तदा च ददृशे वृक्षाधिरूढैश्चरपूरुषैः ।
आगच्छन्सोमचन्द्रर्षिरकथ्यत च योषिताम् ॥१५९॥
मा शाप्सीदेष इति तास्तस्माद्भीता द्रुतद्रुतम् ।
नेशुर्मृग्य इव व्याधादमिलन्त्यः परस्परम् ॥१६०॥
स्थानं गते च पितरि कुमारस्ताः पणाङ्गनाः ।
नष्टस्ताः स्वमिवान्वेष्टुमुपाक्रंस्ताखिले वने ॥१६१॥
ददर्श रथिनं चैकं स धावन्मृगवद्वने ।
तमप्यृषिं मन्यमानोऽवदत्ताताभिवादये ॥१६२॥
रथ्यपृच्छत्कुमार त्वं क्व गमिष्यसि सोऽवदत् ।
गमिष्याम्याश्रमपदं महर्षे पोतनाभिधम् ॥१६३॥
रथ्यवादीदहमपि यियासुः पोतनाश्रमम् ।
ततोऽन्वगात्तमग्रेगूमिव वल्कलचीर्यपि ॥१६४॥
स तापसकुमारोऽपि पथि यान्त्रथिकप्रियाम् ।
रथाधिरूढां तातेति भाषते स्म मुहुर्मुहुः ॥१६५॥
रथिनं तत्प्रियावोचत्कोऽयमस्योपचारगीः ।
यत्तापसकुमारोऽयं मयि तातेति जल्पति ॥१६६॥

---

158 a A तापसं । 160 b sec. m. B द्रुता द्रुतं । 161 a D गवेष ।
162 d B °वादयेत् ।

रथिकः स्माह मुग्धो ऽयमस्त्रीके ऽस्मिन्वने वसन् ।
स्त्रीपुंसयोरभेदज्ञो नरं त्वामपि मन्यते ॥१६७॥
प्रदीयमानान्दृष्ट्वाश्वानूचे वल्कलचीर्यदः ।
वाह्यन्ते किममी तात मृगा नार्हन्त्यदो मुनेः ॥१६८॥
व्याजहाराथ रथिकः स्मित्वा वल्कलचीरिणम् ।
ईदृक्कर्मेदमेवैषां मृगाणां नात्र दुष्यति ॥१६९॥
रथिको मोदकांस्तस्मै ददौ वल्कलचीरिणे ।
सो ऽखादच्च तदास्वादसुखमग्नो जगाद च ॥१७०॥
ईदृशानि वनफलान्यहमद्य ऽप्यखादिषम् ।
महर्षिभिः प्रदत्तानि पोतनाश्रमवासिभिः ॥१७१॥
अभूच्च मोदकास्वादात्पोतनं गन्तुमुत्सुकः ।
कषायकटुकैर्नैटितः स बिल्वामलकादिभिः ॥१७२॥
रथिनस्याभवद्युद्धं चौरेणैकेन दोष्मता ।
रथी गाढप्रहारेण तं चौरं निजघान च ॥१७३॥
चौरो ऽप्युवाच घातो हि वैरिणो ऽपि प्रशस्यते ।
मामजैषीः प्रहारेण तेन तुष्टो ऽस्मि मानव ॥१७४॥
विपुलं धनमत्रास्ति मदीयं तद्गृहाण भोः ।
त्रयो ऽप्यारोपयामासुरथ तद्द्रविणं रथे ॥१७५॥
क्रमेण पोतनं प्राप्तो रथी वल्कलचीरिणम् ।
प्रोवाच प्रेषितो यस्ते पोतनाश्रम एष सः ॥१७६॥

---

168 a A प्रधी°, d B D मृगाग्रार्हन्त्यदो, A वार्हं त्वयामुने, D र्हन्त्येनमुनेः ।

किंचिच्च द्रविणं तस्मै रथी तापससूनवे ।
प्रददौ मार्गसुहृदे स्मयमानो जगाद च ॥१७७॥
अमुष्मिन्नाश्रमपदे न विना द्रव्यमाश्रमः ।
तदाश्रमार्थी कस्मैचिद्दद्याद्द्रव्यमवक्रये ॥१७८॥
किमत्र यामि यास्यत्र किं वेति सकले पुरे ।
उत्प्रेक्षमाणो हर्म्याणि बभ्राम मुनिपुङ्गवः ॥१७९॥
नराणामथ नारीणामप्यबुद्धा स मुग्धधीः ।
अभिवादनवातूल उपाहास्यत नागरैः ॥१८०॥
पुरे भ्रमन्नथैकस्या वेश्यायाः स निकेतने ।
विवेश त्वरितं चापमुक्तः शर इवास्खलन् ॥१८१॥
स तदेवाश्रमं मेने वेश्यां मुनिममन्यत ।
इति तामप्युवाचैवं तात त्वामभिवादये ॥१८२॥
इति च प्रार्थयाञ्चक्रे समर्प्य मसीटजम् ।
अमुष्यावक्रये द्रव्ये महर्षे गृह्यतामिदम् ॥१८३॥
त्वदीय उटजो ह्येष गृह्यतामित्युदीर्य सा ।
तदङ्गसंस्कारकृते दिवाकीर्तिमजूहवत् ॥१८४॥
अनिच्छतो ऽपि तस्यर्षेर्नापितो गणिकाज्ञया ।
शूर्पोपमान्पादनखानदुन्वन्नुदतारयत् ॥१८५॥
कृत्वा वल्कलचीरापनयनं सा पणाङ्गना ।
तं कुमारं स्नपयितुं वराग्निं पर्यधापयत् ॥१८६॥

---

178 b C °च्चय । 179 c A B D उत्प्रेक्ष्यमाणो । 180 c C वातूल । 182 d B °भिवादयेत् । 183 d A गृह्यतामित । 185 a MSS शूर्पा or शूर्पं । 186 d A चौरटं ।

आजन्म मुनिवेषं मे मापनैषीर्महामुने ।
स वल्कलापनयनादिति बाल इवारटत् ॥१८७॥
वेश्यावेषन्महर्षीणामतिथीनामिहाश्रमे ।
उपचारपदं ह्येतत्तत्प्रतीच्छसि किं न हि ॥१८८॥
त्वमस्मदाश्रमाचारानीदृशांश्चेत्प्रतीच्छसि ।
तदा हि लप्स्यसे वस्तुमुटजं मुनिपुत्रक ॥१८९॥
ततस्तद्वासलोभेन स तापसकुमारकः ।
नाङ्गमप्यधुनोन्मन्त्रवशीकृत इवोरगः ॥१९०॥
तत्केशपाशं जटिलं तैलेनाभ्यज्य सा स्वयम् ।
ऊर्णापिण्डमिव शनैर्विवव्रे वरवर्णिनी ॥१९१॥
अभ्यज्य मृज्यमानाङ्गस्तया सोसेन्दुभूरभूत् ।
कण्डूयमान इव गौः सुखनिद्राणलोचनः ॥१९२॥
गणिका स्नपयित्वाथ कवोष्णैर्गन्धवारिभिः ।
तमामोचयदग्र्याणि वस्त्राण्याभरणानि च ॥१९३॥
तयैकस्या दारिकायाः पाणिग्रहमकारि सः ।
साभात्तस्य करगता गार्हस्थ्यश्रीरिवाङ्गिनी ॥१९४॥
वधूवरं च गायन्त्यः सर्वास्तस्थुः पणाङ्गनाः ।
दध्यावृषिकुमारस्तु ऋषयो अमी पठन्ति किम् ॥१९५॥
अवीवदश्च मङ्गल्यान्यातोद्यानि पणाङ्गना ।
किमेतदिति सम्भ्रान्तः पधात्कर्णौ [illegible] सोमभूः ॥१९६॥

189 d D मुनिपुंगव: । 192 c A कंडूयमान, C D कडूयमान, C सुखं । 193 c A °ग्र्याणि । 194 a D दारिकया ।

मुनिवेषजुषो वेश्याः कुमारानयने गताः ।
यथा गतास्तथैवैत्य तदोर्वीशं व्यजिज्ञपन् ॥१९७॥
तैस्तैः प्रकारैः प्रालोभि स कुमारो वनेचरः ।
इहागन्तुं च सङ्केतमस्माभिः सममग्रहीत् ॥१९८॥
अथायान्तं तदा दूरे दृष्ट्वा तत्पितरं वयम् ।
तस्य शापभयान्नष्टाः कातराः स्त्रीस्वभावतः ॥१९९॥
सो ऽस्मान् गवेषयन्नस्मत्प्रलोभनवशंवदः ।
भ्रमन्वनाद्वनं गामी न गामी पितुराश्रमम् ॥२००॥
अनुशिष्ये विशामीशः किमकार्यमहं जडः ।
वियोजितौ पितापुत्रौ मया प्राप्तश्च नानुजः ॥२०१॥
पितृपार्श्वात्परिभ्रष्टो जीविष्यति कथं नु सः ।
कियच्चिरं जीवति हि मीनो नीराद्बहिष्कृतः ॥२०२॥
एवं दुःखादरतिभाग्भूङ्कृशमिलापतिः ।
उद्वेल्लञ्शयने ऽप्यस्थान्मीनः स्तोक इवाम्भसि ॥२०३॥
वेश्यायाः सदने तस्यास्तदा च मुरजध्वनिः ।
कर्णयोरवनीभर्तुरप्रियातिथितां ययौ ॥२०४॥
ऊचे च राजा नगरं सर्वं मद्दुःखदुःखितम् ।
लोकोत्तरसुखी को ऽयं यस्यायं मुरजध्वनिः ॥२०५॥
स्वार्थनिष्ठो ऽथवा सर्वो मृदङ्गध्वनिरेष हि ।
मुदे कस्यापि मम तु मुद्गराघातसन्निभः ॥२०६॥

---

197 c C D pr. m. वैत्य। 199 a B पयायांतं। 200 a C भ्रमद्द॰ 200 d Bi marg. नागामी। 201 a MSS अनुशिष्ये. b A ॰क पौत्रि॰। 203 a MSS उद्वेलम्। 204 a C सदनेश। 205 b C दुःखितं, A दुःखित।

सा राज्ञो वागनुस्रुत्या पानीयमिव कुल्यया ।
कर्णालवालं वेश्यायास्तस्यास्तूर्णमपूर्यत ॥२०७॥
प्रसन्नचन्द्रं राजानं माथ गत्वा कृताञ्जलिः ।
वेश्या विज्ञपयामास धार्ष्ट्योत्कृष्टप्रगल्भवाक् ॥२०८॥
पुरा मे देव दैवज्ञो ऽकथयद्यस्तवौकसि ।
ऋषिवेषो युवाभ्येति दद्यास्तस्य निजां सुताम् ॥२०९॥
ऋषिवेषो युवा को ऽपि गोवत्स व्यवहारवित् ।
अभ्यागान्मद्गृहे सो ऽद्योद्वाहितः सुतया मया ॥२१०॥
तद्विवाहोत्सवे देव गीतवाद्यादि मद्गृहे ।
दुःखिनं त्वां न जानामि यद्यागो मे सहस्व तत् ॥२११॥
अथादिशन्नरान्राजा कुमारं दृष्टपूर्विणः ।
उपलक्षयितुं ते ऽपि गत्वोपालक्षयंश्च तम् ॥२१२॥
अथैत्य ते नरेन्द्राय तं तथैव व्यजिज्ञपन् ।
राजापि दृष्टसुस्वप्न इवात्यर्थममोदत ॥२१३॥
तया समन्वितं बध्वा करेणुमधिरुह्य च ।
आनिनाय निजं वेश्म राजा वल्कलचीरिणम् ॥२१४॥
अखिलव्यवहारज्ञो राज्ञाकारि क्रमेण सः ।
पशवो ऽपि हि शिक्ष्यन्ते नियुक्तैः किं पुनः पुमान् ॥२१५॥
तस्मै राज्यविभागं च दत्त्वा राजा कृतार्थभूत् ।
राजकन्याश्च तेनोद्वाहयत्स्वर्वधूपमाः ॥२१६॥
बधूभिः सहितः ताभिरखण्डितसमोदितः ।

208 d C धार्ष्ट्यो॰ A प्रगल्भवाक् । 210 b A व्यवहारवत् । 211 b C मद्गृहे । 214 b D corrects ॰चिरेण । 215 c A शिक्ष्यते ।

रेमे वल्कलचीर्युच्चैः सुखाब्धिजलकुञ्जरः ॥२१७॥
सो ऽन्यदा रथिको मार्गसुहृद्वल्कलचीरिणः ।
तच्चौरदत्तं स्वर्णादि विक्रीणानो ऽभ्रमत्पुरे ॥२१८॥
यद्यस्य यस्य चौरेणापहृतं स स तद्धनम् ।
उपलक्ष्यारक्षकाणामूर्ध्वबाहुरचीकथत् ॥२१९॥
संयम्य च स आरक्षै राजद्वारमनीयत ।
तं च राजानुजो ऽद्राक्षीद्दया जीवानुकम्पया ॥२२०॥
तमुपालक्षयद्वल्कलचीरी मार्गोपकारिणम् ।
अमोचयच्च सन्तो हि नोपकारस्य विस्मराः ॥२२१॥
सोमचन्द्रो ऽपि पुत्रं स्वमपश्यन्नश्रमदने ।
हृद्यादृद्धं नेत्रजलैः सिञ्चन्निव निरन्तरम् ॥२२२॥
प्रसन्नचन्द्रप्रहितैर्नरैर्वल्कलचीरिणः ।
प्रवृत्तौ कथितायां च सो ऽभूदुद्घाटलोचनः ॥२२३॥
परं सुतवियोगेन तेन तस्यातिरोदनात् ।
अक्ष्णो ऽपि राचीकरणमन्धत्वमुदपद्यत ॥२२४॥
स जरत्तापसो ऽन्यैश्च तपःसब्रह्मचारिभिः ।
तापसैस्तपसः प्रान्ते फलादिभिरपार्यत ॥२२५॥
पूर्णेषु द्वादशस्वब्देष्वन्यदैवमचिन्तयत् ।
प्रसन्नचन्द्रावरजो रजन्यर्धे प्रबोधभाक् ॥२२६॥

---

220 d B नुकम्पया । 221 d N कारिस्यविस्मराः । 223 d B °दुद्घाटलोचनः । 225 b A तपःसद्म° । 226 b A °न्द्रेद ।

विपेदे मन्दभाग्यस्य जातमात्रस्य मे प्रसूः ।
कुमारभृत्यामकरोत्तातो ऽरण्ये वसन्नपि ॥२२७॥
अहर्निशं कटिस्थेन मया दूरं दुरात्मना ।
तपःकष्टादप्यधिकं कष्टमुत्पादितं पितुः ॥२२८॥
यावत्प्रत्युपकाराय क्षमीभूतो ऽस्मि यौवने ।
दैवादिहागमं तावत्पापो ऽहमजितेन्द्रियः ॥२२९॥
पितुरानृण्यभाग्नाहं भवाम्येकेन जन्मना ।
येनाहं सोढकष्टेन पूतरः कुञ्जरीकृतः ॥२३०॥
स एवं चिन्तयन्नेव गत्वा राजानमब्रवीत् ।
देवाहं तातपादानां भृशमुत्को ऽस्मि दर्शने ॥२३१॥
राजा प्रोवाच हे भ्रातः पिताहि मम आवयोः ।
तत्पाददर्शनौत्सुक्यं तथैवास्ति ममापि तत् ॥२३२॥
राजा च युवराजश्च ततस्तौ सपरिच्छदौ ।
तदाश्रमपदं तातपादालङ्कृतमीयतुः ॥२३३॥
द्वावप्युत्तेरतुर्यानादूचे वल्कलचीरदः ।
दृष्ट्वा तपोवनमिदं राज्यश्रीस्तृणवन्मम ॥२३४॥
सरोवराणि तान्येतान्यक्रीडं यत्र हंसवत् ।
ते ऽमी द्रुमाः कपिरिवाखादिषं यत्फलान्यहम् ॥२३५॥
ते ऽमी मे भ्रातर इव पांशुक्रीडासखा मृगाः ।
मद्दियस्ता इमा मातृनिभा यासामपां पयः ॥२३६॥

---

228 a A कष्ट। 230 d C भवाम्ये°। 230 c A corrected in सोढकष्टेन, d D पैतरः। 231 d A चस्तदातेश हि दर्शने।

स्वामिन्वने सुखान्यस्मिन्कियन्ति कथयाम्यहम् ।
अप्येकं पितृशुश्रूषा सुखं राज्ये कुतो मम ॥२ ३ ७॥
तचाश्रमे विविशतुर्भ्रातरौ तावुभावपि ।
तातं चाग्रे ददृशतुर्नयनाम्भोजभास्करम् ॥२ ३ ८॥
उवाच सोमचन्द्रर्षिं प्रणमन्मेदिनीपतिः ।
प्रसन्नचन्द्रस्ते सूनुस्तात त्वां प्रणमत्यसौ ॥२ ३ ९॥
प्रणमन्तं च राजानं सोमः पस्पर्श पाणिना ।
मार्जन्निव तदङ्गेषु सङ्क्रान्तवर्त्मनीरजः ॥२ ४ ०॥
पित्रा स्वपाणिपद्मेन स्पृश्यमानो ऽवनीपतिः ।
उत्कोरककदम्बाभो बभूव पुलकाङ्कुरैः ॥२ ४ १॥
राजानुजो ऽपि सोमर्षिं प्रणमन्निदमब्रवीत् ।
प्राप्तो वल्कलचीर्येष त्वत्पादाम्भोजभृङ्गताम् ॥२ ४ २॥
मौलिमाघ्राय तस्याजमिव सोमः प्रमोदभाक् ।
तमालिलिङ्ग सर्वाङ्गं नगं नव इवाम्बुदः ॥२ ४ ३॥
सोमर्षेस्तु तदा कोष्णो बाष्पः प्रादुर्भवन्दृशोः ।
बभूव तत्क्षणादान्ध्यप्रध्वंसपरमौषधम् ॥२ ४ ४॥
दृग्भ्यां तत्कालमालोकवतीभ्यां तावुभौ मुनिः ।
ददर्श पुनरावृत्तगार्हस्थ्यस्नेहबन्धनः ॥२ ४ ५॥
पृच्छति स्म च हे वत्सौ सुखं कालो ऽतिवाहितः ।
तावूचतुस्त्वत्प्रसादात्कल्याणद्रुमदोहदात् ॥२ ४ ६॥

---

240 d D B संक्रांतं, B वर्तोन्दि रजः, A रजो । 241 a A पिता, A B स्पृश्यमानो, d C भूपतिः । 245 d A बभ्रव ।

अपेक्षमाणं तत्कौटूगभूत्तापसभाण्डकम् ।
इति वल्कलचीर्यन्तरुटजं प्राविशद्द्रुतम् ॥२४७॥
तानि तापसभाण्डानि स्वोत्तरीयाञ्चलेन सः ।
प्रतिलेखितुमारेभे प्राग्वमलं परिस्पृशन् ॥२४८॥
तस्य दैवमभूच्चिन्ता पात्राणि यतिनामहम् ।
किं पात्रकेसरिकया क्वापि प्रत्यलिखं पुरा ॥२४९॥
इति चिन्तयतस्तस्य जातिस्मृतिरजायत ।
सस्मार च पुरःस्थितवद्देवमर्त्यभवान्निजान् ॥२५०॥
श्रामण्यं प्राग्भवकृतं स्मरन्वल्कलचीर्यथ ।
वैराग्यं परमं भेजे मित्रं निर्वाणसम्पदः ॥२५१॥
धर्मध्यानं व्यतिक्रम्य शुक्लध्याने द्वितीयके ।
स्थितो वल्कलचीर्याप केवलज्ञानमुज्ज्वलम् ॥२५२॥
तत्कालकेवलज्ञानी महात्मा सोमचन्द्रभूः ।
पितुर्भ्रातुश्च विदधे सुधाभां धर्मदेशनाम् ॥२५३॥
सोमचन्द्रः प्रसन्नश्च ततो वल्कलचीरिणम् ।
सुरार्पितयतिलिङ्गं प्राप्तबोधौ प्रणेमतुः ॥२५४॥
वयं च समवासार्षं विहरन्तो ऽन्यदा नृप ।
उद्याने पोतनप्रत्यासन्ने गत्वा मनोरमे ॥२५५॥
प्रत्येकबुद्धः पितरं निजं वल्कलचीर्यपि ।
अर्पयित्वा मदाम्नायं गतो ऽन्यथा नराधिप ॥२५६॥

---

247 a A प्रेक्षमाणं। 250 d A °र्त्यभ°। 252 b C शुक्लध्याने, D ध्यान, c d A स्थितो, B 2b d, D °चीर्य°। 253 d B सुधाभां, D सुधाभि°।

राजा प्रसन्नचन्द्रो ऽपि प्रययौ पोतनं पुरम् ।
तस्थौ च स्थिरवैराग्यो वाग्भिर्वल्कलचीरिणः ॥२५७॥
तदा प्रसन्नचन्द्रः स्वे राज्ये ऽर्भमपि नन्दनम् ।
स्वयं न्यस्य विरक्तात्मा प्राव्राजीद्मदन्तिके ॥२५८॥
एवमाख्याय विरते श्रीवीरे परमेश्वरे ।
ददर्श देवसम्पातमाकाशे मगधेश्वरः ॥२५९॥
पप्रच्छ श्रेणिको भूयः प्रणम्य जगदीश्वरम् ।
किमेष देवसम्पातो दृश्यते द्योतिताम्बरः ॥२६०॥
स्वाम्यप्याख्यत्प्रसन्नर्षेरुत्पन्नमिह केवलम् ।
कर्तुं च तन्महिमानममराः सम्पतन्त्यमी ॥२६१॥
पुनर्विज्ञपयामास जिनेन्द्रं मगधाधिपः ।
भगवन्केवलज्ञानं कस्मिन्व्युच्छेदमेष्यति ॥२६२॥
नाथो ऽप्यकथयत्पश्य विद्युन्माली सुरो ह्यसौ ।
सामानिको ब्रह्मेन्द्रस्य चतुर्देवीसमावृतः ॥२६३॥
इतो ऽमुष्मात्सप्तमे ऽह्नि च्युत्वा भावी पुरे तव ।
श्रेष्ठिऋषभदत्तस्य जम्बू पुत्रो ऽन्त्यकेवली ॥२६४॥
राजापृच्छदसौ यद्यासन्नच्यवनो ऽमरः ।
तेजो ऽस्य तत्किमक्षीणमथाचख्यौ जगद्गुरुः ॥२६५॥
राजन्नेकावताराणामन्तकाले ऽपि नाकिनाम् ।
तेजःक्षयादिच्यवनलिङ्गान्याविर्भवन्ति न ॥२६६॥

---

260 c B किमेव । 261 a B स्वाम्यथा° । 262 d B D कस्मिन्नु° ।
263 a A वि[illegible]° । 264 c B श्रेष्ठी । 265 d C वाचख्यौ ।

तदा सुरानादृताख्यो जम्बूद्वीपपतिः सुरः ।
शब्देन महतावादीदहो मे कुलमुत्तमम् ॥२६७॥
तदा च श्रेणिको ऽपृच्छद्भगवन्तं कृताञ्जलिः ।
देवो ऽयमेवं स्वकुलप्रशंसां कुरुते कुतः ॥२६८॥
सर्वज्ञः कथयामास राजन्नत्रैव पत्तने ।
इभ्यो गुप्तमतिर्नाम बभूव भुवि विश्रुतः ॥२६९॥
तस्य द्वौ तनुजन्मानावभूतां क्रमयोगतः ।
ज्यायानृषभदत्ताख्यो जिनदासाभिधो लघुः ॥२७०॥
ज्यायानतिसदाचारो द्यूतादिव्यसनी लघुः ।
तौ द्वावाद्यन्तयुगयोः प्रत्यक्षे इव धर्मिणौ ॥२७१॥
ततस्त्वृषभदत्तेन जिनदासः सुमेधसा ।
त्यक्तो दुराचार इति सर्वस्वजनसाक्षिकम् ॥२७२॥
अहमभ्रातृको ऽस्मीति ज्येष्ठः स घोषयित्वदम् ।
कनिष्ठस्य शुन इव प्रवेष्टुं न गृहे ऽप्यदात् ॥२७३॥
जिनदासो ऽन्यदा दीव्यन्नन्येन द्यूतकारिणा ।
संजातद्यूतकलहे सद्यो ऽस्त्रेण न्यहन्यत ॥२७४॥
फलं द्यूतविपतरोरायुधाघातवेदनम् ।
जिनदासो ऽथ भग्नद्रुम इव भूमितले लुठन् ॥२७५॥
स्वजनास्त्वर्षभदत्तमूचुर्भो परमार्हत ।
प्राणिमात्रसाधारण्या दयया जीवयानुजम् ॥२७६॥

---

267 a B •नाख्यो । 268 c D स्वकुले । 269 c A इभ । 276 b A B D परमार्हतः, c C साधारण्य ।

पात्रं कीर्त्तेर्विशुद्धायाः स बन्धुः स च नायकः ।
यो बन्धुं सेवकं चाभ्युद्धरते व्यसनावटात् ॥२७७॥
ऋषभो ऽप्यभ्यधाद्गत्वान्तरज्ञं स्वजनेरितः ।
समाश्वसिहि हे वत्स चास्थे त्वामौषधादिभिः ॥२७८॥
जगाद जिनदासो ऽपि क्षमस्व मम दुर्नयान् ।
कार्यमामुष्मिकं कुर्या जीवितव्यास्पृहस्य मे ॥२७९॥
प्रयच्छ परलोकाध्वप्रस्थितस्य ममाधुना ।
धर्मोपदेशपाथेयमार्यानशनपूर्वकम् ॥२८०॥
ऋषभो ऽप्यन्वशादेवमनुजं निर्ममो भव ।
जप स्वच्छमनाः पञ्चपरमेष्ठिनमस्क्रियाम् ॥२८१॥
एवमाद्यनुशिष्यानुजन्मानमृषभः स्वयम् ।
आराधनां सानशनां कारयामास शुद्धधीः ॥२८२॥
विपद्य जिनदासो ऽपि तेन पण्डितमृत्युना ।
जम्बूद्वीपाधिपो जज्ञे देवो ऽयं परमर्द्धिकः ॥२८३॥
अयं चास्मद्वचो ऽश्रौषीद्राजगृहपत्तने ।
केवली चरमो भावी जम्बूर्ऋषभदत्तजः ॥२८४॥
श्रुत्वा केवलिनो भावि स्वे कुले जन्म पावनम् ।
देवो ऽयमेवं स्वकुलप्रशंसां कुरुतेतमाम् ॥२८५॥
राजाप्रच्छत्पुनर्विद्युन्माल्येष भगवन्सुरः ।
किं सुरेभ्यस्तनितेजस्वी ग्रहेभ्यिव दिवाकरः ॥२८६॥

---

279 b B दुर्णयान् । 281 c A स्वच्छ, d MSS परमेष्ठि । 283 c A द्वीपाधिपो । 284 d MSS जंबू ऋषभ॰ । 285 a A B श्रावौ ।

आचख्यौ प्रभुरप्येवं जम्बूद्वीपस्य भारते ।
मगधाख्ये जनपदे ग्रामे सुग्रामनामनि ॥२८७॥
आर्यवाचाष्टकूटो ऽभूत्तस्य पत्नी तु रेवती ।
भवदत्तो भवदेवश्चाभूतां तनयौ तयोः ॥२८८॥ युग्मम् ।
भवदत्तो भवाम्भोधेस्तारणतरीं दृढाम् ।
यौवने ऽप्याददे दीक्षां सुस्थिताचार्यसंनिधौ ॥२८९॥
स व्रतं पालयन्खड्गधारोग्रं श्रुतपारगः ।
व्यहरद्गुरुणा सार्धं द्वितीयकीव तत्तनुः ॥२९०॥
तस्मिन्गच्छे साधुरेको ऽन्यदाचार्यान्व्यजिज्ञपत् ।
अनुजानीत मां यामि यत्र बन्धुजनो ऽस्ति मे ॥२९१॥
तत्रास्ति मे लघुभ्राता स च मय्यस्ति स्नेहलो मयि ।
प्रव्रजिष्यति मां दृष्ट्वा प्रव्रज्यायै ऽपि भद्रकः ॥२९२॥
ततस्तं श्रुतवत्साधुसमेतं गुरुरादिशत् ।
परनिस्तारणपरे गुरुः शिष्ये हि मोदते ॥२९३॥
स जगाम पितुर्धाम गतमात्रो ददर्श च ।
भ्रातुरुद्वाहमारब्धं मन्मथद्रुमदोहदम् ॥२९४॥
विवाहकौतुकव्यग्रः स भ्राता कन्यसो मुनेः ।
विस्मृतान्यकरणीयो मुद्भातुलस्तदाभवत् ॥२९५॥
विवाहसमये प्राप्तमजानन्निव सो ऽग्रजम् ।
नाकार्षीत्स्वागतमपि व्रतादानकथापि का ॥२९६॥

---

289 b A B मरो। 296 c A नोकार्षी d C व्रतदान।

विलक्षः स मुनिर्भूयोऽप्यागमत्सन्निधौ गुरोः ।
आलोच्याकथयत्सर्वामनुजस्य कथां तथा ॥२९७॥
भवदत्तोऽवदद्दृष्टो काठिन्यमनुजन्मनः ।
ज्यायांसं यद्वाद्राक्षीदपिमभ्यागतं गृहे ॥२९८॥
गुरुभक्तेरपि श्रेयः किं नासीद्वाहकौतुकम् ।
तत्परित्यज्य सानन्दः स ज्येष्ठं नान्वियाय यत् ॥२९९॥
कश्चिदूचे तदा साधुर्भवदत्तासि पण्डितः ।
यदि त्वमनुजन्मानं निजं प्रव्राजयिष्यसि ॥३००॥
भवदत्तोऽब्रवीद्धो मगधाख्ये गुरुर्यदि ।
विहरिष्यति तद्वः कौतुकं दर्शयिष्यते ॥३०१॥
विहरन्तोऽन्यदा जग्मुर्मगधानेव सूरयः ।
समीरणवदेकत्र श्रमणानां स्थितिर्न हि ॥३०२॥
आचार्यपादान्वन्दित्वा भवदत्तो व्यजिज्ञपत् ।
स्वजनानित आसन्नान्दिदृक्षे युष्मदाज्ञया ॥३०३॥
भवदत्तं तत्रैकमपि तत्रादिशद्गुरुः ।
एकाकिनोऽप्यर्हति हि विहारो वशिनो मुनेः ॥३०४॥
भवदत्तो जगामाथ स्वेषां संसारिणां गृहे ।
प्रव्रज्याग्राहणेनानुग्रहीतुमनुजं निजम् ॥३०५॥
नागदत्तस्य तनयां वासुकीकुक्षिसम्भवाम् ।
उपयेमे भवदेवो भवदत्तानुजस्तदा ॥३०६॥

---

297 b C स्वजन्, d B तदा । 300 b B भवदत्तोऽपि च पंडित. । 301 b C दृष्ट, c B C by second hand तद्वद । 303 d A B ०दिदृ० । 305 b B C b. 2.h देव!, c A ग्रहरे० ।

ततोद्वाहोत्सवाः सर्वे बन्धवस्तं मुदाभ्ययुः ।
मन्यमाना उत्सवोपर्युत्सवं तत्समागमम् ॥३०७॥
सद्यः पाद्येन तत्पादौ प्रक्षाल्य प्रासुकेन ते ।
पादोदकमवन्दन्त मत्वा तीर्थोदकाधिकम् ॥३०८॥
भवाब्धिमज्जनभयादवलम्बमिवेच्छवः ।
लगित्वा पादयोः सर्वे बन्धवस्तं ववन्दिरे ॥३०९॥
मुनिरप्यभ्यधाद्यूयं विवाहव्याकुलाः स्थ भोः ।
यामो विहर्तुमन्यत्र धर्मलाभो ऽस्तु वो ऽनघाः ॥३१०॥
तमृषिं बन्धवः सर्वे भक्तपानादिभिर्मुदा ।
एषणीयकल्पनीयप्रासुकैः प्रत्यलाभयन् ॥३११॥
तदानीं भवदेवो ऽपि कुलाचारं प्रपालयन् ।
सेव्यमानां वयस्याभिर्नवोढां मण्डयन्नभूत् ॥३१२॥
चक्रे ऽङ्गरागं प्रेयस्याः श्रीचन्दनरसेन सः ।
चन्द्रातपरसेनेवाकृष्टेन शशिमण्डलात् ॥३१३॥
तस्या मूर्ध्नि च धम्मिल्लं सुमनोदामगर्भितम् ।
घनस्य पक्षग्राहिणः स्वर्भाणोः श्रीमलिम्लुचम् ॥३१४॥
तत्कपोलफलकयोः कस्तूर्या पत्त्रवल्लरीम् ।
मीनकेतोरिव जयप्रशस्तिमलिखत्स्वयम् ॥३१५॥
कुचयोर्मण्डनं यावन्नवोढः स प्रचक्रमे ।
तावदागममश्रौषीद्भवदत्तमहामुनेः ॥३१६॥

---

308 a A पायेन, b C D प्राशुकेन । 309 b B C मिवोत्सवः । 310 b B विवाहे । 311 d A लाभयत्, c B एषणीये, A कल्पनीयैः । 314 c A कच्छिभुवं ।

भवदेवस्तु भद्रात्मा चिन्तयामासिवानिदम् ।
अप्यविसृष्टा व्याघुटन्त्येते नैते हि सोदराः ॥३२७॥
अहं तु सोदरो ऽमुष्य द्वावावां स्नेहलौ मिथः ।
तदनेनाविसृष्टस्य न्याय्यं व्याघुटनं न मे ॥३२८॥
भक्तपानादिभारेणाक्रान्तो ऽयं नूनमग्रजः ।
ततो ममार्पयद्वोढुं प्रसीदन्घृतभाजनम् ॥३२९॥
चिरादभ्यागतं श्रान्तं ज्यायांसं भ्रातरं मुनिम् ।
अमुक्त्वा तदमुं स्थाने न निवर्तितुमुत्सहे ॥३३०॥
मासौ वलेदिति मनोव्याक्षेपार्थं कनीयसः ।
गार्हस्थ्यवार्तां प्राक्रंस्त भवदत्तो महामुनिः ॥३३१॥
एते ते ग्रामपर्यन्तपादपाः पान्थमण्डपाः ।
भ्रातरावां वानरवद्येषु स्वैरमरंस्वहि ॥३३२॥
सरोवराणि तान्येतान्यावाभ्यां यत्र शैशवे ।
अकारि नलिनीनालैर्हारश्रीः कण्ठयोर्मिथः ॥३३३॥
एताश्च ग्रामपर्यन्तभूमयो भूरिवालुकाः ।
यत्रावां वालुकाचैत्यक्रीडां प्राष्व्यस्वहि ॥३३४॥
भवदत्तो ऽनुजन्मानमेवमध्वनि वार्तयन् ।
जगाम ग्राममाचार्यपादपद्मैः पवित्रितम् ॥३३५॥
सानुजं भवदत्तर्षिं वसतिद्वारमागतम् ।
निरीक्ष्य क्षुल्लकाः प्रोचुः कृतवक्रोष्ठिका मिथः ॥३३६॥

327 d A नैतेहि सहोदराः B सोसदरा° । 328 d A न्याय्यं । 330 a A चिरादि B चिरादा । 332 c A वानिर° । 333 d A B C हरि A B D श्री ।

दिव्यवेषधरो नूनमनुजो मुनिनामुना ।
प्रव्राजयितुमानीतः स्वं सत्यापयितुं वचः ॥३३७॥
सूरिरूचे भवदत्त तरुणः को ऽयमागतः ।
सोऽवदद्भगवन्दीक्षां जिघृक्षुर्मे ऽनुजो ह्यसौ ॥३३८॥
सूरिणा भवदेवो ऽपि पप्रच्छे किं प्रतार्य्यसि ।
माभूद्भ्राता मृषावादीत्येवमित्यवदत्स तु ॥३३९॥
भवदेवस्तदैवाथ पर्यव्राज्यत सूरिभिः ।
साधुभ्यां सहितो ऽन्यत्र विहर्तुं च न्ययोज्यत ॥३४०॥
भवदेवः किमद्यापि नायात इति चिन्तया ।
स्वजनाः पृष्ठतो ऽभ्येत्य भवदत्तं बभाषिरे ॥३४१॥
भवदेवोऽन्वगाद्युष्मान्प्रियां हित्वार्धमण्डिताम् ।
तद्ब्रूत किं त्वनायाते तस्मिञ्जीवन्मृता वयम् ॥३४२॥
खिद्यते चक्रवाकीव सा युक्तविधवा वधूः ।
विश्राम्यति न तस्याश्च नयनाम्बु निराम्बुवत् ॥३४३॥
एकाक्यस्मानमापृच्छ्य भवदेवः क्वचिद्व्रजेत् ।
इति स्वप्ने ऽप्यसम्भाव्यं गतश्च क्वापि किं वद ॥३४४॥
नष्टस्वानिव पहिलान्भवदेवमपश्यतः ।
अस्माननुग्रहाणार्थं कथय क्व स ते ऽनुजः ॥३४५॥
धर्माद्र्दैक्षुरनुजस्तोचे मिथ्याप्ययो मुनिः ।
यात आयातमात्रो ऽपि न विद्मः स ययौ क्वचित् ॥३४६॥

---

338 a B सूरिरूचे । 339 d A B तुः । 343 b A विविधा । 343 d D निरंबुवत् । 345 a A पश्वा० C वहि० ।

गतो ऽन्येनाध्वना किं स इति जल्पन्त आशु ते ।
प्रत्यावर्तन्त दीनास्या दस्युभिर्मुषिता इव ॥३४७॥
तां नवोढां हृदि ध्यायन्भ्रातृभक्त्यैव केवलम् ।
प्रव्रज्यां भवदेवो ऽपि सशल्यां पर्यपालयत् ॥३४८॥
महर्षिर्भवदत्तो ऽपि कालेन बहुनेयुषा ।
विपेदे ऽनशनं कृत्वा सौधर्मे च सुरो ऽभवत् ॥३४९॥
भवदेवो ऽप्यदो दध्यौ नागिला प्रेयसी मम ।
प्रेयांस्तस्या अहमपि विरहो ही द्वयोरभूत् ॥३५०॥
भ्रातुरेवोपरोधेन व्रतं चिरमपालयम् ।
तस्मिंस्तु स्वर्गते किं मे व्रतेनायासहेतुना ॥३५१॥
न तथा व्रतकष्टेन दुष्करेणास्मि पीडितः ।
यथा तद्विरहेणोच्चैर्भविष्यति कथं नु सा ॥३५२॥
गजीव वारीपतिता पद्मिनीव हिमाविला ।
मरालीव मरुगता वल्लीव ग्रीष्मतापभाक् ॥३५३॥
यूथभ्रष्टेव हरिणी पाशबद्धेव शारिका ।
सा मन्ये दैन्यभाग्लोकानुकम्प्यैव भविष्यति॥३५४॥ युग्मम्॥
यदि प्राप्स्यामि जीवन्तीं तां प्रियामायतेक्षणाम् ।
तदद्यापि हि गार्हस्थ्यवृत्तो रंस्ये तया सह ॥३५५॥
चिन्तातन्तुभिरेवं स्वं नियच्छन्नूर्णनाभवत् ।
स्थविरर्षीननापृच्छ्य भवदेवो विनिर्ययौ ॥३५६॥

---

348 b A भक्त्यैक । 349 b A D बहुनायुषा । 350 c D प्रेयांसस्या ।
353 *a*. On the margin in D यदुक्तं कोशे वारिस्तु गजबन्धभूरिति ।

तूर्णं जगाम च ग्रामं सुग्रामं राष्ट्रकूटभूः ।
तस्थौ च संवृतद्वारबाह्यायतनसंनिधौ ॥३५७॥
गन्धमाल्यधरा नारी ब्राह्मण्या सममेकया ।
तत्राभ्यागान्मुनिरसावित्यवन्दत तं च सा ॥३५८॥
पप्रच्छ भवदेवस्तां राष्ट्रकूटः स आर्यवान् ।
पत्नी [redacted] रेवती तस्य भद्रे जीवति वा न वा ॥३५९॥
कथयामास साप्येवमार्यवान्रेवती च सा ।
व्यपद्येतां तयोर्यागाद्भूयान्कालो विपन्नयोः ॥३६०॥
भूयो ऽप्यपृच्छत्स मुनिरार्यवत्सूनुना प्रिया ।
भवदेवेन या त्यक्ता नवोढा सास्ति वा न वा ॥३६१॥
सा दध्यौ भवदेवो ऽयं नूनमात्तव्रतो ऽपगात् ।
यदि वा वार्तयाम्येनमनेनसमिहागतम् ॥३६२॥
उवाच चिन्तयित्वैवमार्यवद्रेवतीसुतः ।
त्वमेव भवदेवो ऽसि किमिहागास्तपोधन ॥३६३॥
भवदेवो ऽवदत्साधु त्वयाहमुपलक्षितः ।
स एव भवदेवो ऽस्मि नागिलाजीवितेश्वरः ॥३६४॥
तदाग्रजोपरोधेन तां विमुच्य निरीयुषा ।
अनिच्छतापि हि मया व्रतमादायि दुष्करम् ॥३६५॥
विपन्ने साम्प्रतं भ्रातर्यहमङ्कुशवर्जितः ।
नागिला सा कथमभूदित्यागां तद्दिदृक्षया ॥३६६॥

---

357 c C संवृत॰ । 360 b A व्यपद्ये॰ । 363 b B ॰दागमे॰ ।
365 b C व्रतमादाय॰ । 366 b B ॰त्यागां ।

नागिला चिन्तयामास चिराद्दृष्टां हि मामसौ ।
न हि प्रत्यभिजानाति परावृत्तवयोगुणाम् ॥३६७॥
आत्मानं ज्ञापयाम्येनमिति प्रोवाच नागिला ।
नागिला सास्म्यहं हन्त नवोढात्याजि या त्वया ॥३६८॥
एतावता च कालेन यौवने ऽपि व्यतीयुषि ।
किं नाम मयि लावण्यं पुण्याशय विमृश्यताम् ॥३६९॥
मुक्त्वा रत्नत्रयं स्वर्गापवर्गफलदायकम् ।
वराटिकामात्रनिभां मा ग्रहीमां महाशय ॥३७०॥
अत्यन्तघोरनरकपातप्रतिभुवामहो ।
विषयाणां स्मरास्त्राणां मा गास्त्वं भेदनीयताम् ॥३७१॥
ग्राहितो ऽसि व्रतं भ्रात्रा छद्मनापि हितैषिणा ।
तमप्यमात्रं मा मंस्था मयि पापखनौ रतः ॥३७२॥
तदद्यापि निवर्तस्व गुरुपादाननुव्रज ।
मयि रागकृतं पापमालोचय तदन्तिके ॥३७३॥
यावदेवं भवदेवं नागिला प्रशमन्वशात् ।
ब्राह्मण्या दारकस्तावत्तत्रागाद्भुक्तपायसः ॥३७४॥
ऊचे च पायसं भुक्तं यन्मयाद्य सुधोपमम् ।
तदमिष्याम्यहं मातरधो धारय भाजनम् ॥३७५॥
निमन्त्रितो ऽहमन्यत्र लप्स्ये तत्र च दक्षिणाम् ।
अत्रान्तपायसो मातर्भोक्तुं यक्ष्यामि नो पुनः ॥३७६॥

---

367 b C चिरदृष्टां, d A परावृत्य । 371 c A B क्षीणां । 376 d A भ्रक्ष्यामि, B शिक्ष्यामि ।

आदाय दक्षिणामद्यागतो भुक्तो ऽपि पायसम् ।
स्वयं वान्तं स्वयं भोक्ष्ये का ह्रीः स्वोच्छिष्टभोजने ॥३७७॥
ब्राह्मणस्तूवाच वान्ताशी जुगुप्स्यस्त्वं भविष्यसि ।
अनं जुगुप्सनीयेन कर्मणानेन दारक ॥३७८॥
तच्छ्रुत्वा भवदेवो ऽपि निजगादेति हे बटो ।
त्वं भविष्यसि वान्ताशी निकृष्टः कुक्कुरादपि ॥३७९॥
नागिलोवाच तस्यापि यद्येवं वेत्सि वक्षि च ।
तन्मामुद्वम्य किमिति भूयो ऽप्युपबुभुक्षसे ॥३८०॥
मांसासृग्गन्धिविण्मूत्रपूर्णा ऽहमधमाधमा ।
वान्तादपि जुगुप्स्यास्मि मामिच्छन् किं न लज्जसे ॥३८१॥
पश्यस्यद्रौ ज्वलदग्निं न पुनः पादयोरधः ।
यत्परं शिक्षयस्येवं न स्वं शिक्षयसि स्वयम् ॥३८२॥
का हि पुंगणना तेषां ये ऽन्यशिक्षाविचक्षणाः ।
ये स्वं शिक्षयितुं दक्षास्तेषां पुंगणना नृणाम् ॥३८३॥
भवदेवो ऽवदत्साधु शिक्षितो ऽस्मि त्वयानघे ।
आनीतः पथि जात्यन्ध इव यामहमुत्पथे ॥३८४॥
तदस्तु स्वजनान्दृष्ट्वा यास्यामि गुरुसंनिधौ ।
व्रतातीचारमालोच्य तप्स्ये ऽहं दुस्तपं तपः ॥३८५॥
नागिलाप्यवदत् किं ते स्वजनैः स्वार्थभाग्भव ।
मूर्तिमन्तो हि ते विघ्ना भाविनो गुरुदर्शने ॥३८६॥

---

381 c. E D [illegible] । 382 d. A [illegible] ।

तद्गच्छ गुरुपादान्ते दान्तात्मा व्रतमाचर ।
प्रव्रजिष्याम्यहमपि प्रतिनीजनसन्निधौ ॥३८७॥
भवदेवो ऽथ वन्दित्वार्हद्बिम्बानि समाहितः ।
गत्वा गुर्वन्तिके ऽकार्षीत्कृत्यमालोचनादिकम् ॥३८८॥
श्रामण्यं निरतीचारं भवदेवः प्रपालयन् ।
कालं कृत्वादिकल्पे ऽभूच्छक्रसामानिकः सुरः ॥३८९॥
इतश्च भवदत्तस्य जीवः स्वर्गात्परिच्युतः ।
विजये पुष्कलावत्यां विदेहोर्वीशिरोमणौ ॥३९०॥
नगर्यां पुण्डरीकिण्यां वज्रदत्तस्य चक्रिणः ।
यशोधराभिधानाया राज्ञ्याः कुक्षाववातरत् ॥३९१॥ युग्मम् ।
तस्मिन्नुपागते कुक्षिसरोवरमरालताम् ।
अभूद्यशोधरादेव्या दोहदो ऽम्भोधिमज्जने ॥३९२॥
ततश्चाम्भोधिसध्रीच्यां सीतानद्यां महीपतिः ।
क्रीडयित्वा महादेवीं तद्दोहदमपूरयत् ॥३९३॥
सम्पूर्णदोहदा साथ महादेवी यशोधरा ।
सखीव कलयामास लावण्यमधिकाधिकम् ॥३९४॥
पूर्णे च समये ऽसूत महिषी चक्रवर्तिनः ।
उत्तमं तनुजन्मानं गङ्गेव कनकाम्बुजम् ॥३९५॥
यशोधराया उत्पन्नदोहदानुगतं नृपः ।
सागरदत्त इत्याख्यां तस्याकृत शुभे ऽहनि ॥३९६॥

---

388 a D भवदेवो ऽपि ।

धात्रीभिर्लाल्यमानश्च पयःपानादिकर्मभिः ।
शशीवासादयद्वृद्धिं राजपुत्रः क्रमेण सः ॥३९७॥
वक्तुं प्रवीणतां प्राप्तः स कुमारोऽध्यजीगपत् ।
उदस्य काञ्चनलतामुक्तं शुकशारिकाः ॥३९८॥
प्रौढीभवन्सुहृद्भिश्च स रेमे रत्नकन्दुकैः ।
पीनांसभूमिकारङ्गन्नृत्यन्माणिक्यकुण्डलः ॥३९९॥
समये स नरेन्द्रेण नियुक्तो गुरुसन्निधौ ।
गुरोः कलाः परिपपौ कूपादप इवाध्वगः ॥४००॥
विश्वस्यापि भुवो नेत्रकैरवाणि प्रमोदयन् ।
शशीव सम्पूर्णकलः प्रतिपेदे स यौवनम् ॥४०१॥
स्वयंवरागताः कन्याः पितृभ्यां पर्यणायि सः ।
एता हि पात्रमायान्ति रत्नाकरमिवापगाः ॥४०२॥
अनङ्गाशीभिरुत्सेव करेणुभिरिव द्विपः ।
ताराभिरिव शीतांशुस्ताभिः सममरंस्त सः ॥४०३॥
नारीभिरन्यदा क्रीडाप्रासादे मदनोपमः ।
मेरुसन्निभमाकाशे स ददर्शाभ्रमण्डलम् ॥४०४॥
अचिन्तयच्च यादृग्हि श्रूयते मेरुरागमे ।
तादृगभ्रमयः सोऽयं काप्यहो रमणीयता ॥४०५॥
एवं मेरुनिभं मेघमण्डलं तस्य पश्यतः ।
साभूद्वाङ्मुखी दृष्टिर्विस्मयेव तदन्तरे ॥४०६॥

---

398 d A B C D सारिकाः । 403 d A °रंस्यत । 405 c C मेरुग-र्भे । d A काप्य ।

कुमारोऽपश्यदुत्पश्यो यावत्तन्मेघमण्डलम् ।
वारिबुद्बुदवत्तावत्तद्विलीय ययौ क्वचित् ॥४०७॥
कुमारोऽचिन्तयच्चैवं क्षणिकोऽयं यथाम्बुदः ।
तथा शरीरमप्येतत्का कथा सम्पदां पुनः ॥४०८॥
यत्प्रातस्तन्न मध्याह्ने यन्मध्याह्ने न तन्निशि ।
निरीक्ष्यते भवेऽस्मिन्हो पदार्थानामनित्यता ॥४०९॥
विवेकजलसिक्तस्य मर्त्यजन्ममहीरुहः ।
सकामनिर्जरासारं तद्गृह्णामि व्रतं फलम् ॥४१०॥
सुधीः सागरदत्तोऽथ परं वैराग्यमुद्वहन् ।
व्रतादानाय पितरावापप्रच्छ कृताञ्जलिः ॥४११॥
पितरावूचतुर्वत्स यौवनेऽपि व्रताग्रहः ।
वीणायां वाद्यमानायां शास्त्रपाठ इवैष ते ॥४१२॥
इदानीं युवराजस्त्वं राजापि त्वं भविष्यसि ।
राज्यं चिरं पालयित्वा गृहीयाः समये व्रतम् ॥४१३॥
सागरो व्याहरत्पूज्याः प्रत्याख्याता मया श्रियः ।
परिव्रज्यामुपादातुं तदादिशथ किं न माम् ॥४१४॥
इत्याग्रहकुठारेण प्रेमपाशं तयोः सुधीः ।
छित्त्वोदाथान्वमन्येतां तौ व्रतग्रहणाय तम् ॥४१५॥
अनेकराजतनयपरिवारोऽथ सागरः ।
आददे व्रतमम्लानं सागराचार्यसन्निधौ ॥४१६॥

---

407 a A उत्पश्यो । 410 a D सकाम । d A व्रत । 414 b C D प्रत्याख्यातं मया । 416 a A B sec. m. व्रतम् ।

विविधाभिग्रहधरो गुरुसेवापरायणः ।
क्रमात्सागरदत्तो ऽभूच्छ्रुतसागरपारगः ॥४१७॥
न दूरे तपसः किंचिदिति प्रत्ययकारकम् ।
अवधिज्ञानमुत्पेदे सागरस्य तपस्विनः ॥४१८॥
भवदेवस्य जीवो ऽपि पूर्णे काले दिवश्च्युतः ।
तत्रैव विजये वीतशोकायां पूःशिरोमणौ ॥४१९॥
पद्मरथाभिधानस्य महर्द्धेरवनीपतेः ।
महिष्यां वनमालायां शिवो नाम सुतो ऽभवत् ॥४२०॥ युग्मम् ॥
स पाल्यमानो यत्नेन कल्पद्रुम इवोद्गतः ।
क्रमेण कलयन्वृद्धिं काकपक्षधरो ऽभवत् ॥४२१॥
साक्षिमात्रीकृतगुरौ तस्मिन्शास्त्रशिरोमणौ ।
स्थितो गृहीतमुक्ता इव सद्यस्कस्तु कलाः ॥४२२॥
यौवने पर्यणैषीत्स राजकन्याः कुलोद्भवाः ।
सम्पृक्तयाऽऽभक्ताभिर्लताभिरिव पादपः ॥४२३॥
सक्रमस्य चान्येद्युः प्रासादे तस्य तस्थुषः ।
सागरर्षिः पुरीबाह्योपवने समवासरत् ॥४२४॥
तत्र कामसमृद्धाख्यः सार्थवाहो महामुनिम् ।
तं प्रत्यलाभयद्भक्त्या मासक्षपणपारणे ॥४२५॥
गृहे कामसमृद्धस्य पात्रदानप्रभावतः ।
वसुधारापतद्व्योम्नः पात्रे दानाद्धि किं न हि ॥४२६॥
शिवस्तदद्भुतं श्रुत्वा गत्वावन्दत तं मुनिम् ।

419 b D दिवश्च्युतः । 423 c C pr. m. A om. D पश्चात् ... ।
426 d A B C D दानाद्धि ।

निषसाद च तत्पादपद्मान्ते राजहंसवत् ॥४२७॥
चतुर्दशानां पूर्वाणामाकरः सागरो ऽपि हि ।
शिवस्य सपरीवारस्याचख्यौ धर्ममार्हतम् ॥४२८॥
विशेषतश्च संसारासारतां तस्य धीमतः ।
गमयामास स मुनिर्मनसि स्फटिकामले ॥४२९॥
शिवो ऽपृच्छच्च तन्महर्षिं किं प्राग्भवभवः प्रभो ।
स्नेहो मे पश्यतो यत्त्वां हर्षो ऽयमधिकाधिकः ॥४३०॥
ज्ञात्वा चावधिनाचख्यौ मुनिस्त्वं पूर्वजन्मनि ।
कनिष्ठो ऽभूर्मम भ्राता प्राणेभ्यो ऽप्यतिवल्लभः ॥४३१॥
मया प्रव्रजितेन त्वमनिच्छन्नपि हि व्रतम् ।
उपायेन ग्राहितो ऽसि परलोकहितेच्छया ॥४३२॥
अभूव स सुरावावां सौधर्मे परमर्द्धिकौ ।
कुमुदेन्द्वोरिव प्रीतिस्तत्राप्यभवदावयोः ॥४३३॥
भवे ऽस्मिन्वीतरागो ऽहं स्वे परे वा समानदृक् ।
त्वं त्वद्यापि सरागत्वात्प्राग्भवस्नेहभाङ्मयि ॥४३४॥
शिवो ऽवदद्गुणादानाद्देवो ऽभूवं पुराप्यहम् ।
तदिहापि भवे पूर्वभववद्देहि मे व्रतम् ॥४३५॥
आपृच्छ्य पितरौ यावदायामि व्रतहेतवे ।
पूज्यास्तावदिहैवाध्वं यूयं मयि कृपालवः ॥४३६॥
गत्वा शिवकुमारो ऽपि पितृपादान्व्यजिज्ञपत् ।
अद्य सागरदत्तर्षेः शुश्रुवे देशना मया ॥४३७॥

---

430 b B स्नेहो । 431 a A B कुमुदेशोरिव । 431 c A हि । 435 b A B देवो । 436 c A °हं, B °ध्व, C °ध्वं । 437 a B गत्वा ।

तत्प्रसादादधिगता भवस्यासारता मया ।
ततस्तस्माद्विरक्तो ऽस्मि वीवधादिव भारिकः ॥४३८॥
तत्सर्वथानुजानीथ प्रव्रज्याग्रहणाय माम् ।
प्रभूतो मोहतमसः शरणं सागरो ऽद्य मे ॥४३९॥
पितरावूचतुर्वत्स व्रतं मादत्स्व यौवने ।
नाद्यापि पूर्यते ऽस्माकं त्वत्क्रीडालोकजं सुखम् ॥४४०॥
अत्यन्तं निर्ममो भूस्त्वं कथमेकपदे ऽपि हि ।
अस्मांस्तमानिवायुष्मन्यदस्मान्विजिहासि ॥४४१॥
यदि भक्तो ऽसि यच्चास्मानापृच्छ्य च गमिष्यसि ।
तत्कारैकतानात्मा भविता रसनावयोः ॥४४२॥
इत्यनादिष्टतः पित्रोः शिवो ऽगन्तुमनीश्वरः ।
तत्रैव सर्वसावद्यनियमाद्भावयत्यभूत् ॥४४३॥
मुनेः सागरदत्तस्य शिष्यो ऽहमिति निश्चयी ।
तस्थौ स मौनमास्थाय मौनं सर्वार्थसाधकम् ॥४४४॥
पत्तादृयामितो भोक्तुं स किञ्चिद्भुङ्क्ते च सः ।
मह्यं न रोचते किञ्चिदित्येकमवदन्मुहुः ॥४४५॥
एवमुद्वेजितो राजा शिवेन शिवकाङ्क्षिणा ।
इभ्यपुत्रं दृढधर्मं समाहूय समादिशत् ॥४४६॥
सावद्यपरिहारेण शिवेन तनयेन मे ।
मौनमास्थितमिदं वत्स यावन्निहुरपैतमा ॥४४७॥

---

438 d C नीवधादिव । 440 a b MSS [illegible] । 441 c A [illegible], D [illegible] । 444 d B [illegible] । 445 d A [illegible], so corrected in D.

मोघफाल इव दीपी करीव प्रभवन्मदः ।
भोजनायापि यतते न स चाटुशतैरपि ॥४४८॥
यथा वेत्सि तथा वत्स वत्सं भोजय मे शिवम् ।
त्वया चैवं कृतवता किं किं नोपकृतं मम ॥४४९॥
सञ्जीवय पक्षिणं कायकुलायाद्गन्तुमुत्सुकम् ।
प्रत्याशापाशबन्धेन नियन्त्रय महाशय ॥४५०॥
दृढधर्मो ऽपि तामाज्ञामुररीकृत्य भूपतेः ।
ययौ शिवकुमारस्याभ्यर्णं बुद्धिजलार्णवः ॥४५१॥
कृत्वा नैषेधिकीं तस्य सदनान्तः प्रविश्य च ।
क्रमज्ञः प्रतिचक्राम स ऐर्यापथिकीं सुधीः ॥४५२॥
वन्दनं द्वादशावर्तं दत्त्वा भूमिं प्रमार्ज्य च ।
निषसाद वदन्नुच्चैरनुजानीहि मामिति ॥४५३॥
शिवो ऽवददहो इभ्य साधूनामुपसागरम् ।
विनयो ऽयं मया दृष्टः स कथं मयि युज्यते ॥४५४॥
इभ्यपुत्रो ऽभ्यधात्सम्यग्दृष्टीनां यत्र कुत्रचित् ।
समभावो हि योग्यः स्यात्सर्वस्य विनयस्य भोः ॥४५५॥
यस्य कस्यापि हि स्वान्तं समभावाधिवासितम् ।
स वन्दनार्हो भवति दोषाशंकापि नेह भोः ॥४५६॥
कुमार किं तु पृच्छामि प्रष्टुमेवाहमागमम् ।
रसज्वरातुरेणेव किं त्वयात्याजि भोजनम् ॥४५७॥

---

452 a C नैषि°, D नैष° । 452 d A ऐर्यां, A सुधो, B ईर्यां । 455 b A विनयस्य, A समय चेर ।

शिवो ऽवदद्विसृजतो व्रताय पितरौ न माम् ।
ततो भावयतीभूय स्थितो ऽस्मि विरतो गृहात् ॥४५८॥
यथा क्षुद्विग्य पितरौ विहाय ममतां मयि ।
व्रतार्थमादिशतो मामतः कुर्वे न भोजनम् ॥४५९॥
इभ्यो ऽभ्यधत्त यद्येवं तत्कुमार महाशय ।
धर्मो ह्यधीनो देहस्य देहस्त्वाहारसम्भवः ॥४६०॥
आहारं निरवद्यं हि गृह्णन्त्यपि महर्षयः ।
शरीरे तु निराहारे दुष्करा कर्मनिर्जरा ॥४६१॥
कुमारो ऽप्यभ्यधादिभ्यसूनो सम्पद्यते मम ।
नाहारो ऽप्यनवद्यो ऽत्र तस्मादसमभोजनम् ॥४६२॥
इभ्यो ऽवादीद्दृढत्वं मे शिष्यसे ऽहमतः परम् ।
सर्वं सम्पादयिष्यामि निरवद्यं यदिच्छसि ॥४६३॥
व्याजहार कुमारो ऽपि षष्ठे नहि निरन्तरम् ।
षष्ठं कृत्वा करिष्ये ऽहमाचामाम्लेन पारणम् ॥४६४॥
शिवस्य भावयतिनस्तदाद्यपि महेभ्यजः ।
विनयं कर्तुमारेभे सामाचारीविचक्षणः ॥४६५॥
तपस्यतः शिवस्यापि ययौ द्वादशवत्सरी ।
मोदात्पितृभ्यां न पुनर्धर्मर्षि गुरुसन्निधौ ॥४६६॥

459 b B [illegible] । 460 C adds the following sloka after 460, [illegible] । [illegible] ॥ 461 a A [illegible] । 464 c MSS [illegible] । 465 b A [illegible] । 466 b B [illegible], in the margin of D [illegible], A [illegible], A pr. m. [illegible] ।

मृत्वा शिवकुमारो ऽभूद्ब्रह्मलोके महाद्युतिः ।
विद्युन्माल्यभिधानो ऽयमिन्द्रसामानिकः सुरः ॥४६७॥
आसन्नच्यवनस्यास्य पुण्यात्मन इयं द्युतिः ।
पुराभूद्ब्रह्मलोकेन्द्रसमानद्युतिरेष हि ॥४६८॥
च्युत्वायमत्रैव पुरे सप्तमे ऽहन्यतो दिनात् ।
ऋषभेभ्यस्य तनयो जम्बूर्भाव्यन्त्यकेवली ॥४६९॥
तदा चोपसमस्तर्षिं विद्युन्मालिनि जग्मुषि ।
चतस्रस्तत्प्रिया एवं पप्रच्छुस्तं महामुनिम् ॥४७०॥
इतो ऽस्माकं वियुक्तानां विद्युन्मालिदिवौकसः ।
समागमः पुनः क्वापि भविष्यत्यथवा न वा ॥४७१॥
स्थविराख्यश्च सन्तीभ्यास्तत्वारो ऽत्रैव पत्तने ।
समुद्रः प्रियसमुद्रः कुबेरः सागरो ऽपि च ॥४७२॥
तेषां चतुर्णां चतस्रः पुत्र्यो यूयं भविष्यथ ।
मर्त्यत्वमीयुषा भावी तत्र वो ऽनेन सङ्गमः ॥४७३॥
सुरासुरैः सेवितपादपद्मः
श्रीवर्धमानो ऽपि कृपासमुद्रः ।
भव्याब्जसूर्यो ऽतिशयर्द्धिपात्रं
विहर्तुमन्यत्र ततो जगाम ॥४७४॥

इत्याचार्यश्रीहेमचन्द्रविरचिते परिशिष्टपर्वणि स्थविरावलीचरिते महाकाव्ये जम्बूस्वामिपूर्वभववर्णनो नाम प्रथमः सर्गः ॥१॥

---

468 c B सुरोभूद्°, D पुरासेन्द्र। 473 a C स्तेषां। Colophon C चरित्रे, A om. पूर्व, B पूर्वभव।

# CANTO II.



इतश्च नगरे राजगृहे राजशिरोमणिः ।
श्रेणिको ऽपालयद्राज्यं प्राज्यश्रीर्मघवानिव ॥१॥
तत्पर्षद्भूषणं श्रेष्ठी श्रेष्ठो धर्म्येण कर्मणा ।
नाम्ना ऋषभदत्तो ऽभूदर्हद्धर्मधुरन्धरः ॥२॥
अर्हन्देवो गुरुः साधुरित्येव स दिवानिशम् ।
जजाप सर्वाभिमतसिद्धिमन्त्राक्षरोपमम् ॥३॥
गुरुवाक्कतकक्षोदसंक्रमभवत्सदा ।
प्रशान्तदुर्ध्यानमलं तन्मनोवारि निर्मलम् ॥४॥
सरोवरस्येव जलं फलं मार्गतरोरिव ।
तस्यैश्वर्यमभूत्केषां नैवोपकारकम् ॥५॥
धर्मानुसारिणी सत्या गत्या हंस्यनुहारिणी ।
सधर्मचारिणी तस्य धारिणीत्याख्ययाभवत् ॥६॥
तस्या गुणेषु भूयःसु गाम्भीर्यादिषु सत्स्वपि ।
प्रयत्नः सुष्ठु शीले ऽभूच्छीलाढ्या हि कुलस्त्रियः ॥७॥
सती संवीतसर्वाङ्गा नीरङ्गीशोभिनी च सा ।
सञ्चार करस्पर्शमसहेव तरणेरपि ॥८॥
गुणैरत्यन्तविमलैः सा शीलविनयादिभिः ।
पत्युर्न्यलीयत हृदि मध्येवार्धीव जाह्नवी ॥९॥

---

2 b A D धर्मेण । 3 a C चर्हद्देवो । 4 a D चोद् । 6 b A हंसा॰ c C सधर्मचारिणी । 8 a A सर्वाङ्गी । 9 b A च, d MSS मध्येवार्धौ or र्धौ ।

नखमांसवदन्योन्यं तयोर्नित्यावियुक्तयोः ।
अभूदखण्डितं प्रेम द्विशरीरैकचेतसोः ॥१०॥
धारिणी चिन्तयामास निरपत्या परेद्यवि ।
धत्ते जन्म ममापुत्रं नैष्फल्यमवकेशिवत् ॥११॥
शैत्यमुत्पादयन्नङ्गे सुधारस इवोच्चकैः ।
रमते तनुजन्माङ्के धन्यानामेव योषिताम् ॥१२॥
गृहवासो हि पापाय तत्रापि सुतवर्जितः ।
तदेतत्खल्वलवणकुभोजननिभं मम ॥१३॥
किं चिन्ताविधुरासीति पत्या पृष्टा नु धारिणी ।
दुःखं न्यवेदयत्तस्मै तन्मनःसम्प्रधारितम् ॥१४॥
पुत्रचिन्तोद्भवं दुःखं सा पत्यौ यद्यपि न्यधात् ।
तथापि न क्षीणमभूदभवत्प्रत्युताधिकम् ॥१५॥
नित्यं हृदयशल्येन तेन दुःखेन धारिणी ।
कृशतां कलयामास द्वितीयेन्दुकलातुला ॥१६॥
विनिस्तारयिषुर्दुःखं तत्तस्याः पतिरन्यदा ।
उवाच स्नेहजलधिस्रोतःसन्निभया गिरा ॥१७॥
यामो ऽद्य वैभारगिरिं तत्रोद्याने कृशोदरि ।
रमामहे रम्यतया नन्दनोद्यानसन्निभे ॥१८॥
धारिणी पतिवाचं तां तथेति प्रत्यपद्यत ।
मान्या हि पतिवाग्दुःखविस्मारश्च भवत्विति ॥१९॥

---

10 d C द्वेम॰। 11 c A धिनुजन्म, d A ॰केश्वत्। 13 c A तदेते, B तदेव। 15 c B यथा तदीयचमथुर। 16 d C D तुलां, A तुला। 17 a A C विमुच्या॰, c A जलदः, d A B D तोतः। 19 b D प्रतिपद्यत।

ततश्चर्षभदत्तो ऽपि सद्यः सज्जीकृते रथे ।
आरुरोह तया हंसरोमकोमलतूलिके ॥२०॥
अपि संयोजितार्वाणमनर्वाणं महारथम् ।
अधिरूढौ दम्पती तौ प्रास्थिषातां गिरिं प्रति ॥२१॥
वाह्यालीभूरियं पत्नि श्रेणिकस्य महीपतेः ।
वाह्यमानतुरङ्गाणां फेनबुद्बुददन्तुरा ॥२२॥
राज्ञो मत्तद्विपालानरूपतां सूचयन्त्यमी ।
तद्बन्धत्वचितस्कन्धा नगरप्रान्तपादपाः ॥२३॥
अमूनि गोकुलान्यार्ये रम्याण्यृषभभाङ्कृतैः ।
उत्कर्णतर्णककुलान्युद्दामरथनिस्वनात् ॥२४॥
एते च मार्गे तरुणसहकाराः कृशोदरि ।
सारस्वतौषधीभूतपल्लवाः पिकयोषिताम् ॥२५॥
मृगा वायुमिवारूढा रथनिर्घोषभीरवः ।
प्रायः प्रयान्त्यमी व्योम्नि जिहासन्तो महीमिव ॥२६॥
मृगाक्षीचुम्बनेष्वेते ऽरघट्टा वारिवर्षिणः ।
मूर्त्यन्तरजुषः पृथ्व्यां पुष्करावर्तका इव ॥२७॥
द्रष्टव्यदर्शनैरेवं पत्नीं पथि विनोदयन् ।
जगाम वैभारगिरिमृषभः सपरिच्छदः॥२८॥सप्तभिः कुलकं॥
जायापती तावथ्यधावुत्तेरतुरथो रथात् ।
वैभारपर्वतोद्यानदिदृचानृत्यदाश्रयौ ॥२९॥

---

22 a C पत्नि corrected in भाति। 23 c D मदंचपर्वित। 24 c D वन्मौघं, C कूजत। 25 a D नरवः। 27 a D वने स्रोते।

प्रत्येकं नामधेयानि पृच्छन्तीमध्वशाखिनाम् ।
स्वादूनि निर्झरजलान्याचामन्तीं मुहुर्मुहुः ॥३०॥
तरुच्छायासु सान्द्रासु विश्राम्यन्तीं पदे पदे ।
सुखस्पर्शं विदधतीं शीतलैः कदलीदलैः ॥३१॥
स्मयमानां शुकालापैर्मृगशावेषु वत्सलाम् ।
अङ्कारोपितबालासु वानरीष्वतिसस्पृहाम् ॥३२॥
धारिणीमृषभदत्तो दत्तहस्तावलम्बनः ।
गिरिमारोपयामास तत्सुखेन शनैः शनैः॥३३॥चतुर्भिः कलापकं।
तत्र चर्षभदत्तो ऽपि धारिण्याश्चित्तहारिणीम् ।
अङ्गुल्या दर्शयामास गिरेरुद्यानसंपदम् ॥३४॥
मातुलिङ्गैरिमाः पश्य फलप्राग्भारवामनाः ।
तारैश्च पुष्पैर्विश्रान्तसन्ध्याभ्रा इव दाडिमीः ॥३५॥
मृद्वीकामण्डपाः सन्ति दुर्गाण्यर्कत्विषामपि ।
नृत्यत्केकिकलापाभदलास्तालद्रुमा अमी ॥३६॥
पुष्पजातय एताश्च मिथःसौरभलम्भनैः ।
स्वागतं घोषयन्तीव रोलम्बमुखरच्छलात् ॥३७॥
जम्बूकदम्बमाकन्दपारिभद्रादिभिर्द्रुमैः ।
छायया चोलकमसौ संध्यायित इवाचलः ॥३८॥
ऋषभस्तत्र चापश्यद्वाक्केसरमिवागतम् ।
सिद्धपुत्रं यशोमित्रं श्राद्धं बन्धुमिवात्मनः ॥३९॥

---

35 d A B C D दाडिमी । 36 b A B D °त्विषामिव । 37 c A घोष-यन्तीव ।

ततश्च ऋषभः श्रेष्ठी सिद्धपुत्रमवार्त्तयत् ।
साधर्मिको ऽसि खलु मे तदाख्याहि क यास्यसि ॥४०॥
सो ऽप्याख्यदस्मिन्नुद्याने शिष्यो ऽस्ति चरमार्हतः ।
पञ्चमः समवसृतः सुधर्मा गणभृत्सखे ॥४१॥
तद्वन्दनार्थं यास्यामि यदि वस्तद्विवन्दिषा ।
त्वरध्वं यूयमपि तद्धर्माग्रेर्भवाम्यहम् ॥४२॥
ओमित्युक्त्वा दम्पती तौ तेनैव सह चेलतुः ।
त्रयो ऽप्यथ ययुः स्थानं सुधर्मस्वामिपावितम् ॥४३॥
यथावद्द्वादशावर्तवन्दनेन त्रयो ऽपि ते ।
सुधर्मस्वामिनं भक्त्या वन्दित्वा न्यषदन्पुरः ॥४४॥
सुधर्मस्वामिनो धर्मोपदेशपरमामृतम् ।
ते बद्धाञ्जलयः कर्णाञ्जलिभिर्भृशमापपुः ॥४५॥
सिद्धपुत्रश्च समये पप्रच्छ गणभृद्वरम् ।
स जम्बूः कीदृशी जम्बूद्वीपः ख्यातो यदाख्यया ॥४६॥
तामाख्यद्गणभृज्जम्बूं शाश्वद्रत्नमयाकृतिम् ।
तन्मानं तत्प्रभावं च तत्स्वरूपमथापरम् ॥४७॥
तदा च लब्धावसरा धारिणी गणभृद्वरम् ।
पप्रच्छ किमहं पुत्रं जनयिष्यामि वा न वा ॥४८॥
सिद्धपुत्रो ऽवदन्न त्वं सावद्यं प्रष्टुमर्हसि ।
जानन्तो ऽपि हि सावद्यं न व्याख्यान्ति महर्षयः ॥४९॥

---

40 a D ऋषभश्रेष्ठी । 41 a D समवसृतः । 44 a A °वर्तं । 47 b C ऋति A °परं ।

जिनपादोपदेशेन निमित्तज्ञानपण्डितः ।
तवाहमेव कल्याणि कथयिष्याम्यदः शृणु ॥५०॥
धीरस्वभावो मनसा कायेन च पराक्रमी ।
निषेदिवाञ्छिलोत्सङ्गे सुधर्मा गणभृत्त्वया ॥५१॥
सुतजन्म यदप्रच्छि तत्स्वप्ने सिंहमङ्कगम् ।
भद्रे द्रक्ष्यस्यथो कुक्षौ सुतसिंहं धरिष्यसि ॥५२॥ युग्मम् ॥
आख्यातजम्बूतरुवद्गुणरत्नमयस्य ते ।
जम्बूनामा सुतो भावी देवताकृतसंनिधिः ॥५३॥
धारिण्यभिदधे जम्बूदेवतोद्देशपूर्वकम् ।
करिष्ये ऽष्टोत्तरं तस्याचामाम्लानां शतं कृतिम् ॥५४॥
सुधर्मस्वामिनः पादान्वन्दित्वा ते चयोर् ऽपि हि ।
उत्तीर्य वैभारगिरेः पुनः प्रविविशतुः पुरम् ॥५५॥
ततस्वर्षभधारिण्यौ पालयन्तौ गृहस्थताम् ।
सिंहपुत्रवचःप्रत्याशया कालं व्यतीयतुः ॥५६॥
अन्यदा धारिणी स्वप्ने श्वेतसिंहं व्यभालयत् ।
पत्युश्चाकथयत्प्राज्यप्रमोदजलदीर्घिका ॥५७॥
ऋषभो ऽभिदधे सुभ्रु सिंहपुत्रवचो ऽखिलम् ।
तत्सत्यमेव मन्यस्व स्वप्नेन प्रत्ययो ननु ॥५८॥
जम्बूनामा महाभागे पवित्रचरितस्तव ।
सर्वलक्षणसम्पूर्णः पुत्रो नूनं भविष्यति ॥५९॥
ब्रह्मलोकात्परिच्युत्य विद्युन्मालिसुरस्तदा ।

53 d A C चक्रिचे । 54 d D कृति । 58 a MSS सुभ ।

उत्पेदे धारिणीकुक्षिशुक्तौ मौक्तिकरत्नवत् ॥६०॥
तस्याश्चाभूद्देवपूजागुरुपूजासु दोहदः ।
दोहदाः खलु नारीणां गर्भभावानुसारतः ॥६१॥
वित्तेन भूयसा श्रेष्ठी तद्दोहदमपूरयत् ।
उत्पन्नदोहद इव सोऽपि धर्मे धनव्यये ॥६२॥
क्रमेण पुष्यद्गर्भा च सञ्चचारातिमन्थरम् ।
गर्भक्लेशागमभिया सावधानेव धारिणी ॥६३॥
तस्याः कपोलफलकौ पाण्डुरिम्णातिशायिना ।
अभूतां प्रातरेणाङ्कबिम्बसब्रह्मचारिणौ ॥६४॥
ततश्च नवभिर्मासैः सार्धसप्तदिनाधिकैः ।
धारिणी सुषुवे सूनुं न्यूनीकृतरविं रुचा ॥६५॥
मुक्ताचूर्णैव घटितैरक्षतैरतिनिर्मलैः ।
पूर्णानि स्वर्णपात्राणि प्राविशन्नृषभौकसि ॥६६॥
अधिश्रेष्ठि कुलवधूक्षिप्तैर्दूर्वाङ्कुरैस्तुतैः ।
तदासनसमीपोर्व्यां दूर्वावणमिवाभवत् ॥६७॥
सर्वकल्याणधुर्याणि तूर्यवर्याण्यनेकशः ।
नेदुः श्रेष्ठिसद्द्वारे श्रियो लाभनिबन्धनम् ॥६८॥
स्वपुटीकृतसीमन्ताः कुङ्कुमस्तवकैर्नवैः ।
ननृतुस्तद्गृहद्वारे गायन्त्यः कुलबालिकाः ॥६९॥

---

61 b A सुदत्त दोहदः पुनः । 62 d A B धर्मो । 64 b A पाडु- रम्ना-तिशायिनः । 65 d B समीकृत, D मूनीकृत, A कृत्य । 66 a A मुक्ताचूर्णेव B corr. in मुक्ताचूर्णैन, c C सर्वपात्राणि । 67 a A चप, B चाधि, d C °वन° । 69 a B स्वपुटी° ।

ऋषभो विदधे देवगुरुपूजां विशेषतः ।
ददौ च दानमर्थिभ्यो ऽर्थ्यमानो ऽत्यर्थमुच्छ्वसन् ॥७०॥
सूनोर्जम्बूतरोर्नाम्ना जम्बूरित्यभिधां व्यधात् ।
शुभे ऽह्नि ऋषभः श्रेष्ठी संवर्मितमना मुदा ॥७१॥
उल्लापयन्तावङ्कस्थं पितरौ तं दिवानिशम् ।
अभूतां हर्षवाह्वलौ विस्मृतान्यप्रयोजनौ ॥७२॥
पित्रोर्जम्बूकुमारो ऽपि भवन्नुत्सङ्गभूषणम् ।
क्रमेणासादयद्वृद्धिं तयोरिव मनोरथः ॥७३॥
क्रमेण प्रतिपेदे च वयो मध्यममार्षभिः ।
अभूत्पाणिग्रहार्हश्च पित्रोराशालतातरुः ॥७४॥
इतश्च तत्रैव पुरे ऽभून्महेभ्यशिरोमणेः ।
समुद्रप्रियसंज्ञस्य नाम्ना पद्मावती प्रिया ॥७५॥
तथा समुद्रदत्तस्य समुद्रस्येव सम्पदा ।
नाम्ना कनकमालेति पत्न्यभूद्गुणमालिनी ॥७६॥
तथा सागरदत्तस्य गरिष्ठस्याद्भुतश्रिया ।
विनयश्रीरभूद्भार्या सदा विनयशालिनी ॥७७॥
तथा कुबेरदत्तस्य कुबेरस्येव ऋद्धिभिः ।
धनश्रीरिति नाम्नाभूत्पत्नी शीलमहाधना ॥ ७८॥
दम्पतीनाममीषां तु विद्युन्मालिप्रियाश्च्युताः ।
क्रमाद्दुहितरो ऽभूवन्नभिधानेन ता यथा ॥७९॥

---

71 c D ऋषभ । 73 d C मनोरथे । 75 b A B ॰महिभ्य, c A संज्ञय ।

समुद्रश्रीश्च पद्मश्रीः पद्मसेना तथैव च ।
तथा कनकसेनेति रूपात्प्राग्जन्मिका इव ॥८०॥
तथा कुबेरसेनस्य प्रिया कनकवत्यभूत् ।
अभूच्छ्रमणदत्तस्य श्रीषेणेति ॥ गेहिनी ॥८१॥
वसुषेणाभिधानस्याभवद्वीरमती प्रिया ।
वसुपालितस्य पुनर्जयसेनेति वल्लभा ॥८२॥
नभःसेना कनकश्रीस्तथा कनकवत्यपि ।
जयश्रीश्चेति चाभूवंस्तेषां दुहितरः क्रमात् ॥८३॥
अष्टानामपि तासां तु कन्यानां पितरो ऽन्यदा ॥
प्रार्थयाञ्चक्रिरे जम्बूपितरं विनयोद्यताः ॥८४॥
अष्टौ नः कन्यकाः सन्ति रूपलावण्यबन्धुराः ।
कलाब्धिपारदृश्वर्यो गुणैश्वर्यो ऽप्सरःसमाः ॥८५॥
तासां विवाहकल्याणसुहृत्प्राप्तं च यौवनम् ।
वरं तदनुरूपं चापश्याम तव नन्दनम् ॥८६॥
कुलशीलवयोरूपाद्या वरगुणा हि ये ।
जम्बूकुमारे ते सन्ति प्राप्यः पुण्यैरयं वरः ॥८७॥
तासामस्मत्कुमारीणां भवतु त्वत्प्रसादतः ।
वरो जम्बूकुमारो ऽयं दक्षजानामिवोडुपः ॥८८॥
श्रीमानसि कुलीनोऽसि प्रार्थना त्वयि नो ह्रिये ।
कृत्वा विवाहसम्बन्धं सर्वथानुगृहाण नः ॥८९॥

---

82 b C हरि, B corr. in हर. probably वीर॰ । 83 c B साभूवं C चेभू॰ । 85 d B C D गुषे॰ ।

हर्षादृषभदत्तो ऽपि तद्वचः प्रत्यपद्यत ।
स्वयमप्युत्सुकः पुत्रविवाहे प्रार्थितश्च तैः ॥९०॥
जम्बूनाम्ने प्रदत्ताः स्मो वरायातिवरीयसे ।
इति ज्ञात्वा च ताः कन्या धन्यंमन्या मुदं दधुः ॥९१॥
अत्रान्तरे च विहरन्भव्यसत्त्वानि बोधयन् ।
तत्रैवागत्य भगवान्सुधर्मा समवासरत् ॥९२॥
सुधर्मागममोदन्तसुधासिक्तो ऽथ कन्दवत् ।
सद्यो जम्बूकुमारो ऽभूत्प्ररूढपुलकाङ्कुरः ॥९३॥
जम्बूनामा नमस्कर्तुमागतं गणभृद्वरम् ।
जगाम धाम धर्मर्द्धे रथेनाखिलरंहसा ॥९४॥
स प्रणम्य सुधर्माणं शुश्राव श्रावकाग्रणीः ।
सुधानिस्यन्ददेशीयां देशनां तन्मुखाम्बुजात् ॥९५॥
देशना च मनसि सा परिणाममुपेयुषी ।
तस्यादात्तवैराग्यमभाग्यैरतिदुर्लभम् ॥९६॥
सुधर्मस्वामिनं नत्वा जम्बूरेवं व्यजिज्ञपत् ।
आदास्ये ऽहं परिव्रज्यां भवमन्थनकर्मठीम् ॥९७॥
आपृच्छ्य पितरौ यावदायामि परमेश्वर ।
तावत्त्वं कलयात्रैवोद्याने धर्मद्रुमश्रियम् ॥९८॥
तथेति प्रतिपन्ने च सुधर्मस्वामिनापि हि ।
अधिरुह्य रथं जम्बूर्नगरद्वारमाययौ ॥९९॥

---

92 b A अत्रान्तर्प्रबो° । 93 d A भूतप्र° । 94 c A धर्मार्द्ध° । 96 b D corr. °मुपेयुषः ।

तदाभूच्च पुरद्वारं तथेभाश्वरथाकुलम् ।
पतितस्य तिलस्यापि भूप्राप्तिर्नाभवद्यथा ॥१००॥
इति वाचिन्तयज्जम्बूः पुरद्वारानयैव चेत् ।
प्रवेशाय प्रतीक्षिष्ये तत्कालातिक्रमो भवेत् ॥१०१॥
सुधर्मस्वामिनं तत्रागमय्य सद्मनं प्रति ।
गन्तुं व्रतीबुभूषोर्मे न स्थातुमिह युज्यते ॥१०२॥
तद्विशाम्यपरेणैव द्वारेण त्वरयन्नयम् ।
उत्सुकस्य वरं श्रेयानन्योऽध्वा न प्रतीक्षणम् ॥१०३॥
इति यावद्ययौ द्वारान्तरं त्वरितमार्षभिः ।
ददर्श तावत्तत्रापि वप्रं सज्जितयन्त्रकम् ॥१०४॥
वप्रोपरिष्टाद्यन्त्रेषु लम्बितास्त महाशिलाः ।
ददर्श गगनभ्रश्यद्ग्रहगोलकसन्निभाः ॥१०५॥
दध्यौ चैवं परचक्रभयादीदृगुपक्रमः ।
तदेतेनापि हि द्वारेणानर्थसङ्कुलेन किम् ॥१०६॥
गच्छतो मे ऽध्वनानेन शिलोपरि पतेद्यदि ।
तदस्मि नाहं न रथो न रथ्या न च सारथिः ॥१०७॥
एवं [illegible] मृत्युमासाद्याविरतो दुर्गतिं लभे ।
प्राणिनां हि कुमृत्यूनां सुगतिर्व्योमपुष्पवत् ॥१०८॥
मा भूवं स्वार्थतो भ्रष्टो व्याघुट्य पुनरप्यहम् ।
भजामि श्रीसुधर्मांह्रिपद्मसेवामधुव्रतः ॥१०९॥

---

100 a A °भूत्सम्। 102 a C गन्ता corrected in गन्तुं।

इत्युल्लापैर्भिर्वालयित्वा रथं वक्र इव ग्रहः ।
प्रदेशं गणभृत्पादमनार्थं तं पुनर्ययौ ॥११०॥
सुधर्मस्वामिनं जम्बूरिति नत्वा व्यजिज्ञपत् ।
यावज्जीवं ब्रह्मचर्यं प्रतिपन्नोऽस्म्यहं त्रिधा ॥१११॥
अनुज्ञातो भगवता नियमं प्रतिपद्य तम् ।
इत्युल्लापैर्भिर्धाम जगामाकामविक्रियः ॥११२॥
पित्रोश्च कथयामास यदहं गणभृन्मुखात् ।
सर्वज्ञोपज्ञमन्योघं धर्मं कर्मचयौषधम् ॥११३॥
अनुजानीत मां पूज्याः परिव्रज्यार्थमुत्सुकम् ।
जन्तूनामेष संसारः कारागारनिभः खलु ॥११४॥
रुदन्तौ तौ च पितरावूचतुर्गद्गदस्वरौ ।
मा भूरकाण्डे ऽस्मदाशालतोन्मूलनमारुतः ॥११५॥
चिन्तयामो वयमिदं सवधूको भविष्यसि ।
द्रक्ष्यामः पौत्रवदनं कुलकैरवनिशाकरम् ॥११६॥
प्रव्रज्याया न समयो विषयार्हे ऽत्र यौवने ।
एतस्योचितमाचारं किं नेच्छसि मनागपि ॥११७॥
यदि वात्याग्रहो वत्स प्रव्रज्याविषये तव ।
तथापि किंचिन्मन्यस्व वयं हि गुरवः खलु ॥११८॥
वत्साष्टौ कन्यकास्तुभ्यमस्माभिः सन्ति या वृताः ।
कृत्वा पाणिगृहीतास्ताः पूरयोद्वाहकौतुकम् ॥११९॥

---

110 b A C D वक्र । 111 c d B मयाऽस्मात्पद्मपत्तं । 112 b C विप्रियः । 116 b D corr भविष्यति ।

एवं कृत्वा कुमार त्वं निःप्रत्यूहं परिव्रजेः ।
त्वामनु प्रव्रजिष्यामः कृतार्था वयमप्यथ ॥१२०॥
कुमारो ऽप्यवदद्युष्मदादेशे ऽस्मिन्ननुष्ठिते ।
प्रव्रज्यायां न वार्यो ऽहं बुभुक्षुर्भोजनादिव ॥१२१॥
आमेत्युक्त्वा च पितरौ कथयामासतुर्द्रुतम् ।
कन्यापितॄणामिभ्यानामष्टानां करुणापरौ ॥१२२॥
कन्यास्तु व्यूढमात्रास्तु पुत्रो नः प्रव्रजिष्यति ।
विवाहमप्यसावस्मदुपरोधात्करिष्यति ॥१२३॥
पश्चादपि हि चेत्पश्चात्तापपापं करिष्यथ ।
मा स्म दद्ध्वं तदुद्वाहं दोषः कथयतां न नः ॥१२४॥
अष्टावपि महेभ्यास्ते सकलत्राः सबान्धवाः ।
किं कार्यमिति निर्णेतुं संलपन्ति स्म दुःखिताः ॥१२५॥
श्रुत्वा च तेषां संलापं कन्यास्ता एवमूचिरे ।
पर्यालोचेन पर्याप्तमाप्ताः शृणुत निर्णयम् ॥१२६॥
जम्बूनाम्ने प्रदत्ताः स्मो ऽस्माकं भर्ता स एव हि ।
देया न वयमन्यस्मै लोके ऽप्येतदधीयते ॥१२७॥
सकृज्जल्पन्ति राजानः सकृज्जल्पन्ति साधवः ।
सकृत्कन्याः प्रदीयन्ते त्रीण्येतानि सकृत्सकृत् ॥१२८॥
पितृपादैः प्रदत्ताः स्मस्तस्मादृषभसूनवे ।
स एव गतिरस्माकं वयं तद्गजीविताः ॥१२९॥

---

124 c [illegible] सत । 125 c B C निर्नेतुं, d B संलापति A चल्पिपति ।
126 d C निर्णयं । 127 d A B लोको । 128 d D सार्मिकाः ।

प्रव्रज्यामितरदापि यद्यज्जम्बूः करिष्यति ।
तदेव पतिभक्तानामस्माकमपि युज्यते ॥१३०॥
ते कन्यापितरो जम्बूपितुराख्यापयन्निति ।
सज्जीभवन्तूद्वाहाय प्रमाणं प्रथमं वचः ॥१३१॥
ततो नैमित्तिकमुखात्तैरिभ्यैर्ऋषभेण च ।
विवाहलग्नं निर्णिन्ये तद्दिनात्सप्तमे दिने ॥१३२॥
अष्टेभ्या भ्रातर इव ते ऽष्टावप्येकचेतसः ।
सम्भूय कारयामासुः स्फारमुद्वाहमण्डपम् ॥१३३॥
विचित्रवर्णैर्वासोभिरुल्लोचस्तत्र चाभवत् ।
सन्ध्याभ्रखण्डैराश्लिष्टैरन्तरिक्षतलादिव ॥१३४॥
तत्रोच्चूलीकृतान्याभान्मुक्तादामानि सर्वतः ।
स्वकीयमंशुसर्वस्वं न्यासीकृतमिवेन्दुना ॥१३५॥
तोरणैर्नितरां द्वारैर्वातान्दोलितपल्लवैः ।
मण्डपो ऽभादराक्रान्तसन्ध्यामिव विपञ्चयन् ॥१३६॥
शुशुभे मण्डपो विष्वक्स्वस्तिकन्यस्तमौक्तिकैः ।
उप्तबीजावलिरिवोद्भूत्यै मङ्गलशाखिनाम् ॥१३७॥
अत्रेपि वर्णके जम्बूर्मुहूर्ते दोषवर्जिते ।
कौसुम्भवसनः सो ऽभाद्बालातप इवार्यमा ॥१३८॥
कन्यका अपि ताः लिप्ता वर्णके नाचरन्बहिः ।
राजपत्न्य इवासूर्यंपश्यतायां नियोजिताः ॥१३९॥

---

131 a D पितरो । 138 a A चात्रेपि ।

कुमारश्च कुमार्यश्च स्वस्वस्थानस्थिता अथ ।
विधिवन्मङ्गलस्नानमकार्यन्त शुभे चणे ॥१४०॥
स्नातस्यर्षभस्नोश्च च्योत्तमानाः पयो बभुः ।
आसन्नोत्पाटभीत्यास्त्रु मुञ्चन्त इव कुन्तलाः ॥१४१॥
केशाञ्जम्बूकुमारस्य गन्धकार्यो ऽध्यवासयन् ।
कर्पूरागरुधूमेनोत्तंसलीलां वितन्वता ॥१४२॥
गन्धकारिकया तस्य सुमनोदामगर्भितः ।
जात्याश्वकन्धरावक्रो धम्मिल्लो मूर्ध्न्यबध्यत ॥१४३॥
पर्यधाञ्चारिणोऽस्तनुस्तारे मौक्तिककुण्डले ।
मुखाब्जप्रान्तविश्रान्तमरालमिथुनश्रिणी ॥१४४॥
मुक्ताहारं परिदधे जम्बूर्नाभिलम्बितम् ।
लावण्यसरितः फेनबुद्बुदावलिसन्निभम् ॥१४५॥
स चन्दनविलिप्ताङ्गः सर्वाङ्गामुक्तमौक्तिकः ।
राकाशशाङ्कवत्ताराभालाभिः शुशुभे भृशम् ॥१४६॥
देवदूष्ये इवादूष्ये सदशे श्वेतवाससी ।
विवाहमङ्गलकृते पर्यधादृषभात्मजः ॥१४७॥
अथ जात्याश्वमारूढो मायूरातपवारणः ।
आत्मतुल्यवयोवेषानुचरैः परिवारितः ॥१४८॥
नीरङ्गीछन्नवदनो गीयमानोरुमङ्गलः ।
उत्तार्यमाणलवणो वधूटीभ्यां च पार्श्वयोः ॥१४९॥

141 b A च्योत्यमाना । 142 c A ॰गुरु॰, D मर । 143 a D कारिणया । 145 b A जम्बूर्नाभीप्रलम्बित । 146 a D चन्दनचर्चि॰ । 147 b A B C सदृशे । 148 b C मयूर ।

निनदन्मङ्गलातोद्यः पठन्मङ्गलपाठकः ।
विवाहमण्डलद्वारमार्यैभिस्तरितं ययौ ॥१५०॥

त्रिभिर्विशेषकं ॥

दध्यादिमङ्गलद्रव्यैर्ददावर्घं सुवासिनी ।
तत्र जम्बूकुमारस्य मारस्येव वपुष्मतः ॥१५१॥
शरावसम्पुटं द्वारि वह्निगर्भितमंह्रिणा ।
भङ्क्त्वा सो ऽगान्मातृगृहं गृहं कल्याणसम्पदः ॥१५२॥
ततस्ताभिः कुमारीभिस्तत्राखिला सहाष्टभिः ।
जम्बूकुमारः प्रत्यैच्छत्कौतुकोद्वाहमङ्गलम् ॥१५३॥
ततश्च लग्नवेलायां गत्वा चतुरिकान्तरे ।
आर्यैभिः पर्यणैषीत्ताः पित्रोरनुनिनीषया ॥१५४॥
तारामेलकके दृष्ट्वा कौतुकेषु ससम्भ्रमा ।
सन्तुष्टा मङ्गलावर्त्ते मधुपर्के स्मितानना ॥१५५॥
यौतके सावधाना च हतिन्यञ्चनमोचने ।
वाप्याचिता प्रणामे ऽङ्कारोपणे ऽत्यन्तनिर्वृता ॥१५६॥
अपत्योद्वाहकल्याणसुखमित्याप धारिणी ।
स्युः पुरन्ध्र्यो हि नीरन्ध्रमुदो ऽपत्ये विवाहिते ॥१५७॥

त्रिभिर्विशेषकं ॥

विवाहानन्तरं तासां बन्धूनां च वरस्य च ।
यौतकं तदभूद्येन सौवर्णः क्रियते ऽचलः ॥१५८॥

---

155 c A मंडला॰ ।

ततो मङ्गलदीपेन समाजसहचारिणा ।
गायन्तीभिः कुलस्त्रीभिः कलं धवलमङ्गलम् ॥१५९॥
पुरो मङ्गलतूर्यैश्च वाद्यमानैः कलस्वरम् ।
सङ्गीतकेन भवता तूर्यत्रयमनोरमम् ॥१६०॥
ज्येष्ठैर्ज्येष्ठैः कनिष्ठैश्च बन्धुभिः पार्श्वयायिभिः ।
जम्बूर्जगाम स्वं धाम ताभिरूढाभिरावृतः ॥१६१॥
त्रिभिर्विशेषकं ॥

आदितो वन्दितवतां सर्वज्ञं कुलदेवताम् ।
वधूवराणामभवद्‌य कङ्कणमोक्षणम् ॥१६२॥
धारिण्यृषभदत्ताभ्यां हृष्टाभ्यां तदनन्तरम् ।
अकारि पूजा देवस्य जम्बूद्वीपपतेः स्वयम् ॥१६३॥
ततो जम्बूकुमारो ऽपि सर्वालङ्कारभूषितः ।
वासागारमुपेयाय पत्नीभिस्ताभिरावृतः ॥१६४॥
सकलत्रो ऽपि तत्रास्थादार्यैर्भिर्ब्रह्मचर्यस्थत् ।
विकारहेतौ पार्श्वस्थे ऽप्यविकारा महाशयाः ॥१६५॥

इतश्चात्रैव भरते ऽस्त्युपविन्ध्याद्रिपत्तनम् ।
नाम्ना जयपुरं तत्र विन्ध्यो नामाभवन्नृपः ॥१६६॥
उभावभूतां तनयौ प्रथितौ तस्य भूपतेः ।
आख्यया प्रभवो ज्यायान्प्रभुनामा तु कन्यसः ॥१६७॥
राज्ये जयपुराधीशो ऽन्यदा केनापि हेतुना ।

160 c B C भवना । 161 b D पार्श्वयादिभिः ।

प्रभवे सत्यपि ज्येष्ठे प्रभवे ऽदात्कनीयसे ॥१६८॥
प्रभवो ऽप्यभिमानेन निर्गत्य नगरात्ततः ।
संनिवेशं विधायास्थाद्विन्ध्याद्रेर्विषमावनौ ॥१६९॥
स खात्रखननैर्बन्दिग्रहणैर्वर्त्मपातनैः ।
चौरैः प्रकारैरन्यैश्च जिजीव सपरिच्छदः ॥१७०॥
एत्य विज्ञपयामासुश्चरास्तस्य परेद्यवि ।
ऋद्धिं जम्बूकुमारस्य श्रीदस्याप्युपहासिनीम् ॥१७१॥
विवाहमङ्गले चास्य महेभ्यान्निखिलान्बहून् ।
कथयामासुरत्यर्थमर्थचिन्तामणीनिव ॥१७२॥
अवस्वापनिकातालोद्घाटिनीभ्यां समन्वितः ।
विद्याभ्यां स तदैवागाद्धारिणीतनयौकसि ॥१७३॥
अथावस्वापनिकया विद्यया विन्ध्यराजभूः ।
जाग्रतं सकलं लोकं जम्बूवर्जमसूषुपत् ॥१७४॥
सा विद्या प्राभवत्तस्मै प्राज्यपुण्यजुषे न हि ।
प्रायः पुण्याधिकानां हि न शक्तोऽप्यलमापदे ॥१७५॥
ततो निद्रायमाणानां सर्वेषामपि दस्युभिः ।
अलङ्कारादिसर्वस्वमाच्छेत्तुमुपचक्रमे १७६॥
लुण्टाकेष्वपि लुण्टत्सु स च जम्बूर्महामनाः ।
न चुकोप न चुक्षोभ लीलया त्विदमभ्यधात् ॥१७७॥

---

169 a D ऽप्यपमानेन। 170 c D चौरैः। 173 a D प्रस्वा°।
174 b D राजसूः।

शयानमिह विश्वस्तं निमन्त्रितमिमं जनम् ।
भो भोः स्पृशत मा स्मैषां जागर्म्येषो ऽस्मि यामिकः ॥१७८॥
महापुण्यप्रभावस्य तस्याथ वचसेदृशा ।
ते चौराः स्तम्भवपुषो ऽभूवन् लेप्यमया इव ॥१७९॥
ददर्श धारिणीसूनुं प्रभवो ऽपि निभालयन् ।
पत्नीभिरन्वितं ताभिः करेणुभिरिव द्विपम् ॥१८०॥
कथयामास चात्मानं विन्ध्यराजसुतो ऽस्म्यहम् ।
महात्मन्प्रभवो नाम सख्येनानुगृहाण माम् ॥१८१॥
वयस्य देहि मे विद्यां स्तम्भनीं मोक्षणीमपि ।
अवस्वापनिकातालोद्घाटिन्यौ ते ददाम्यहम् ॥१८२॥
जम्बूरूचे प्रभाते ऽहं प्रभवाद्यावपि प्रियाः ।
नवोढा अपि हि त्यक्त्वा प्रव्रजिष्यामि निर्ममः ॥१८३॥
इदानीमप्यहं भावयतीभूतो ऽस्मि तेन भोः ।
प्रभव प्राभवन्नेयमवस्वापनिका मयि ॥१८४॥
त्यक्ष्यामि लक्ष्मीं तृणवत्प्रातर्भ्रातरिमामहम् ।
तत् किं मे विद्यया कार्यं निरीहस्य वपुष्यपि ॥१८५॥
तामवस्वापिनीं विद्यां संत्यज्य प्रभवोऽपि हि ।
प्रणम्य धारिणीपुत्रमुवाच रचिताञ्जलिः ॥१८६॥
सखे सुखं वैषयिकं भुङ्क्ष्वाभिनवयौवनः ।
अनुकम्पस्व चैमासु नवोढासु त्रिवेक्ष्यसि ॥१८७॥

---

186 d B रञ्जिताञ्जलिः । 187 b D भुक्त्व ।

रमाभिः सह सुभ्रूभिर्भुक्तभोगफलो ऽत्र ।
शोभिष्यते परिव्रज्यामुपात्ता तदनन्तरम् ॥१८८॥
ऊचे जम्बूकुमारो ऽपि सुखं विषयभोगजम् ।
अपायबहुलं स्वल्पं तेन किं दुःखहेतुना ॥१८९॥
सुखं विषयसेवायामत्यल्पं सर्षपादपि ।
दुःखं तु देहिनः प्राज्यं मधुबिन्द्वादिपुंसवत् ॥१९०॥

1. तथा हि पुरुषः कोऽपि देशाद्देशं परिभ्रमन् ।
सार्थेनाविशदटवीं चौरयादोमहानदीम् ॥१९१॥
तं सार्थं लुण्टितुं तत्र चौरव्याघा दधाविरे ।
मृगवच्च पलायन्त सर्वे सार्थनिवासिनः ॥१९२॥
सार्थाद्धीनः स तु पुमान्प्रविवेश महाटवीम् ।
आकण्ठमागतैः प्राणैरभ्युद्यत्कूपवारिवत् ॥१९३॥
उच्चैस्तरो गिरिरिव प्रचरन्मदनिर्झरः ।
उदस्तहस्तो ऽभ्राणीव प्रभ्रंशयितुमम्बरात् ॥१९४॥
न्यञ्चयन्भूमिमंह्रिपातैरन्तःशुषिरिणीमिव ।
आध्मातताम्रतालाक्षो गर्जन्नूर्जितमब्दवत् ॥१९५॥
साक्षाद्यम इव क्रोधादुद्धुरो वनसिन्धुरः ।
वराकं कान्दिशीकं तं पुरुषं प्रत्यधावत ॥१९६॥

त्रिभिर्विशेषकं ॥

---

' 190 c D देहिनां, d MSS मधुबिंद्वाखादिपुंवत् । 192 c C पलायने ।
193 d C D °रभ्युद्य° । 195 d C °समेघवत् ।

मारयिष्याम्यहं याहि याहीति प्रेरयन्निव ।
जघान तं मुहुः पृष्ठे वारणः करशीकरैः ॥१९७॥
स पुमान् कन्दुक इव निपतन्नुत्पतन्भिया ।
प्राप्तप्रायो द्विपेनाप क्षणच्छन्नमथावटम् ॥१९८॥
गजो ऽवश्यं जीवितहृत् कूपे जीवामि जातुचित् ।
इति सो ऽदात्तत्र झम्पां जीविताशा हि दुस्त्यजा ॥१९९॥
वटो ऽवटतटे चाभूत्तत्पादश्चैक आयतः ।
लम्बमानो ऽभवत्कूपमध्ये भुजगभोगवत् ॥२००॥
स पुमान्निपतन्कूपे प्राप तत्पादमन्तरा ।
आलम्ब्य लम्बमानो ऽभ्याद्रज्जुबद्धघटीनिभः ॥२०१॥
करं प्रक्षिप्य कूपान्तः करी पस्पर्श तच्छिरः ।
नाशकत्तु तमादातुं मन्दभाग्य इवौषधीम् ॥२०२॥
दधद्दृष्टिमधोभागे भागधेयविवर्जितः ।
कूपस्यान्तरजगरं गरीयसं ददर्श सः ॥२०३॥
पतन्कवलबुद्ध्या तं निरीक्ष्याजगरो ऽपि सः ।
कूपान्तरपरं कूपमिव वक्त्रं व्यकाशयत् ॥२०४॥
चतुर्ष्वपि हि पार्श्वेषु चतुरो ऽहीन्ददर्श सः ।
कालिन्दीसोदरस्रोत प्राणाघ्राणापहारिणः ॥२०५॥
उत्फणाः फणिनस्ते तु तं दंष्टुं दुष्टचेतसः ।
फूत्कारपवमानाग्नैरमुचन्धूमनीभिभैः ॥२०६॥

---

198 b C द्विपा । 198 c A [illegible] । 199 d C जीविताशापि ।
201 a B C [illegible] ।

वटप्ररोहं तं छेत्तुं मूषकौ द्वौ सितासितौ ।
घटघटेति चक्राते दन्तक्रकचगोचरम् ॥२०७॥
अनाप्नुवन्पुमांसं तं सो ऽपि मत्तो मतङ्गजः ।
जघान वटशाखां तां वटमुत्पाटयन्निव ॥२०८॥
वटस्यान्दोल्यमानेन पादेन स पुमान्दृढम् ।
पार्श्वक्षिप्तमन्धं तच्चानो नियुद्धमिव निर्ममे ॥२०९॥
गजेन हन्यमानायाः शाखाया मधुमक्षिकाः ।
मधुषण्डकमुत्सृज्योड्डिड्यिरे तोमराननाः ॥२१०॥
मक्षिकास्ता ददंशुस्तं लोहसन्दंशसन्निभैः ।
तुण्डैः कीकसविश्रान्तैर्जीवाकृष्टिपरैरिव ॥२११॥
उत्पन्नमक्षिकारुद्धसर्वाङ्गः स पुमांस्तदा ।
शतपद्व इवालक्षि कूपान्निर्गन्तुमुत्सुकः ॥२१२॥
वटस्थमधुकोशाच्च मधुबिन्दुर्मुहुर्मुहुः ।
ललाटे न्यपतत्तस्य वार्धन्या वारिबिन्दुवत् ॥२१३॥
मधुबिन्दुस्तस्य भालाल्लुठित्वा प्राविशन्मुखे ।
स तदास्वादमास्वाद्य सुखं महदमन्यत ॥२१४॥
श्रूयतां प्रभवामुष्य दृष्टान्तस्य च भावना ।
यः पुमान्स हि संसारी याटवी सा तु संसृतिः ॥२१५॥
यो गजो स पुनर्मृत्युर्यः कूपो मर्त्यजन्म तत् ।
यो ऽजगरः स नरको ये ऽहयस्ते क्षुधादयः ॥२१६॥

---

210 a A संडुक B संदर्पं । 211 b B C संदंश corrected in संदंश । 213 d C मार्दान्या । 214 c C आसाद्य corr. in आस्वाद्य । 215 a A C °मुष्य ।

वटपादो यस्तदायुर्मूषकौ यौ सितासितौ ।
तौ शुक्लकृष्णौ द्वौ पक्षावायुच्छेदपरायणौ ॥२१७॥
या मक्षिका व्याधयस्ते मधुबिन्दुस्तु यः स्मृतः ।
तद्वै सुखं वैषयिकं तत्र रज्येत कः सुधीः ॥२१८॥
चतुर्भिः कलापकं ॥

देवो विद्याधरो वापि यदि कूपात्तमुद्धरेत् ।
तत् किमिच्छेदथ न वा स पुमान्दैवदूषितः ॥२१९॥
प्रभवः प्राह को नाम निमज्जन्नापदर्णवे ।
नेच्छेत्तरण्डमद्राक्षमुपकारपरं नरम् ॥२२०॥
जम्बूरुवाच तदहमपारे भवसागरे ।
किं निमज्जामि गणभृद्ये सत्यपि तारके ॥२२१॥
प्रभवोऽभिदधे भ्रातः स्नेहलौ पितरौ निजौ ।
अनुरक्ताश्च गृहिणीः कथं त्यक्ष्यसि निष्ठुरः ॥२२२॥
जम्बूरूचे च को बन्धुर्निर्बन्धोऽप्यनुबन्धरः ।
कुबेरदत्तवद्यस्मात् कर्मणा यत्र बध्यते ॥२२३॥
2. तथा हि मथुरापुर्यामेकाभूद्गणिकोत्तमा ।
नाम्ना कुबेरसेनेति सेनातुल्या मनोभुवः ॥२२४॥
सा च प्रथमगर्भेण निःसामान्यं खेदिता सती ।
वैद्यस्य दर्शिता मात्रा ऊचे हि यत्नं भिषक् ॥२२५॥
धातुस्पन्दादिना वैद्यो विज्ञाय निजमेधसा ।
उवाच मात्रा रोगोऽस्ति किं त्वेतद् गर्भकारणम् ॥२२६॥

---

219 b D [illegible]

अस्या हि युग्ममुत्पन्नमुदरे ऽस्ति सुदुर्वहम् ।
खेदस्तद्धेतुको भावी स पुनः प्रसवावधिः ॥२२७॥
माताप्युवाच तां वत्से गर्भं ते पातयाम्यहम् ।
प्राणापायप्रतिभुवा रचितेनापि तेन किम् ॥२२८॥
वेश्योचे स्वस्ति गर्भाय सहिष्ये क्लेशमप्यहम् ।
सूकरी ह्यसकृद्बह्वपत्यसूः सापि जीवति ॥२२९॥
गर्भक्लेशं सहित्वा च समये गणिका ऽपि सा ।
दारकं दारिकां चापि भ्रातृभाण्डे अजीजनत् ॥२३०॥
माता प्रोवाच गणिकामपत्ये वैरिणी तव ।
यकाभ्यामुदरस्थाभ्यां मृत्युद्वारे ऽसि धारिता ॥२३१॥
युग्मं स्तनन्धयमिदं भावि यौवनहृत्तव ।
वेश्याश्च यौवनाजीवा जीवनद्रव्य यौवनम् ॥२३२॥
उदरात्पतितं युग्ममिदं वत्से पुरीषवत् ।
बहिस्त्याजय मा मोहं कार्षीरिप क्रमो हि नः ॥२३३॥
वेश्योचे यद्यपि ह्येवं तथाप्यम्ब विलम्ब्यताम् ।
दशाहं यावदेतौ च दारकौ पोषयाम्यहम् ॥२३४॥
कथञ्चिदप्यनुज्ञाता सा मात्रा पणसुन्दरी ।
स्तन्यदानेन तौ बालावहर्निशमपोषयत् ॥२३५॥
एवं च बालकौ तस्याः पालयन्त्या दिवानिशम् ।
कालरात्रिप्रतीकाशमेकादशमभूद्दिनम् ॥२३६॥

---

227 a D यस्यास्तु । 229 c A C सूकरी हि ।

कुबेरदत्तकुबेरदत्तानामाङ्किते उभे ।
मुद्रिके कारयित्वा च तदङ्गुल्योर्न्यधत्त सा ॥२३७॥
ततश्चाकारयद्दारुपेटीं बुद्ध्या पटीयसी ।
रत्नैश्च पूरयित्वा तां तत्र तौ बालकौ न्यधात् ॥२३८॥
पेटीं प्रवाहयन्तीं च प्रवाहे यामुने स्वयम् ।
जगाम निरपायं च सा तरन्ती मरालवत् ॥२३९॥
कुबेरसेनापि ततो व्याघुट्य स्वगृहं ययौ ।
अपत्ययोर्ददानेव नयनाञ्जलिभिर्जलम् ॥२४०॥
मञ्जूषा शौर्यनगरद्वारे प्राप्ता दिवामुखे ।
उभाभ्यामिभ्यपुत्राभ्यां ददृशे जगृहे च सा ॥२४१॥
अपश्यतां [illegible] तन्मध्ये तं बालं बालिकां च ताम् ।
एको बालमुपादत्त बालिकामपरः पुनः ॥२४२॥
तौ विदाञ्चक्रतुः पाणिमुद्रिकाक्षरदर्शनात् ।
कुबेरदत्तकुबेरदत्ताख्यौ खल्विमाविति ॥२४३॥
तावुभावप्यवर्धेतामिभ्ययोः सदने तयोः ।
रक्ष्यमाणौ प्रयत्नेन स्वाम्यर्पितनिधानवत् ॥२४४॥
कलाविदौ क्रमेणार्भौ तौ द्वावपि बभूवतुः ।
प्रपेदाते चाभिनवं यौवनं रूपपावनम् ॥२४५॥
अनुरूपाविमावेवेत्येताभ्यां परया मुदा ।
तयोरेव मिथो ऽकारि पाणिग्रहमहोत्सवः ॥२४६॥

---

236 b A B कल्लोलैः । 240 b D ददते । c D दैवादेना । 241 a A पुंसे, C पौरं । 245 a A C क्रमेणाथे, B originally क्रमेणार्भौ ।

वैदग्ध्यशिक्षागुरुणा यौवनेनोपलिप्तयोः ।
तयोरङ्गाधिरूढो ऽभूत्पुंनारीवाहनः स्मरः ॥२४७॥
वधूवराभ्यामन्येद्युर्द्यूतक्रीडा प्रचक्रमे ।
ताभ्यां परस्परोन्मीलत्प्रेमवारितरङ्गिणी ॥२४८॥
कुबेरदत्तस्य करात्प्रस्तावे कापि मुंद्रिका ।
सख्या कुबेरदत्तायाः करोत्सङ्गे न्यधीयत ॥२४९॥
करस्थितामूर्मिकां तां परीक्ष्यमिव नाणकम् ।
कुबेरदत्ता प्रैक्षिष्ट पर्यस्यन्ती मुहुर्मुहुः ॥२५०॥
कुबेरदत्ता दध्यौ च प्रयत्नादियमूर्मिका ।
विदेशघटिता भाति चोर्मिकान्तरदर्शनात् ॥२५१॥
ततस्तामूर्मिकां स्वां च सा पश्यन्ती मुहुर्मुहुः ।
चिन्तावेशात्स्फुरत्काया निश्चिकायेति चेतसि ॥२५२॥
एकत्र देशे घटिते चैकेन तुलया समे ।
समानलिपिनाम्नी द्वे ऊर्मिके सोदरे इव ॥२५३॥
कुबेरदत्तश्चाहं च तद्वावप्यूर्मिके इव ।
अत्यन्तं रूपसदृशौ भ्रातृभाण्डे न संशयः ॥२५४॥
अन्यूनाधिकसर्वाङ्गावावां युगलजौ खलु ।
दैवेन कारितौ हन्त विवाहाकृत्यमीदृशम् ॥२५५॥
जनकेन जनन्या वा द्वयोरप्यावयोर्ध्रुवम् ।
समेनापत्यवात्सल्येनोर्मिके कारिते समे ॥२५६॥

---

249 d C pr. manu निधीयते। 251 b D प्रत्ना यदिय॰ । 252 c C चिंतावेशा स्फु॰ । 254 d A भांडो, C so sec. manu.

सोदरौ यत एवावां तत एव निरन्तरम् ।
नास्मिन्मे पतिधीर्नास्य पत्नीधीर्मय्यजायत ॥२५७॥
कुबेरदत्ता ध्यात्वैवं तथेति कृतनिश्चया ।
करे कुबेरदत्तस्य क्षिपति स्मोर्मिकाद्वयम् ॥२५८॥
कुबेरदत्तो ऽपि तथैवोर्मिकाद्वयदर्शनात् ।
चिन्तासन्तानमासाद्य विषसाद महाशयः ॥२५९॥
ततः कुबेरदत्तायास्तां समर्प्योर्मिकां सुधीः ।
गत्वा दत्त्वा च शपथमिति पप्रच्छ मातरम् ॥२६०॥
किमौरसो ऽपविद्धो वा दत्त्रिमः क्रीतको ऽथवा ।
अन्यो वा तव पुत्रो ऽस्मि पुत्रा हि बहुधा किल ॥२६१॥
आग्रहप्रतिभूभूय पृच्छतस्तस्य साम्बिका ।
मञ्जूषाप्राप्तितः सर्वां कथयामास तां कथाम् ॥२६२॥
कुबेरो ऽप्यवदन्मातः किमकृत्यमिदं कृतम् ।
ज्ञात्वापि युग्मजन्मानावावां यत्परिणायितौ ॥२६३॥
नैव माता वरं माता या पोषितुमनीश्वरी ।
सौभाग्यभाजनीकृत्य तत्याजावां नदीरये ॥२६४॥
नदीरयो हि मृत्यै स्यान्नाकृत्यकरणाय तु ।
जीवितान्मरणं श्रेयो न जीवितमकृत्यकृत् ॥२६५॥
व्याजहार जनन्येवं पुत्रयोर्हितहारिणा ।
रूपेणाप्यनुरूपेण मोहिताः स्मो ऽल्पमेधसः ॥२६६॥

---

259 a A संताप । 264 b A पोषयितु॰, C पोषेतु॰ । 266 c D जन॰-मो, A मन्दो ।

वैदग्ध्यशिक्षागुरुणा यौवनेनोपलिप्तयोः ।
तयोरङ्गाधिरूढो ऽभूत्पुंनारीवाहनः स्मरः ॥२४७॥
वधूवराभ्यामन्येद्युर्द्यूतक्रीडा प्रचक्रमे ।
ताभ्यां परस्परोन्मीलत्प्रेमवारितरङ्गिणी ॥२४८॥
कुबेरदत्तस्य करात्प्रस्तावे कापि मुद्रिका ।
सख्या कुबेरदत्तायाः करोत्सङ्गे न्यधीयत ॥२४९॥
करस्थितामूर्मिकां तां परीक्ष्यमिव नाणकम् ।
कुबेरदत्ता प्रैक्षिष्ट पर्यस्यन्ती मुहुर्मुहुः ॥२५०॥
कुबेरदत्ता दध्यौ च प्रयत्नादियमूर्मिका ।
विदेशघटिता भाति चोर्मिकान्तरदर्शनात् ॥२५१॥
ततस्तामूर्मिकां स्वां च सा पश्यन्ती मुहुर्मुहुः ।
चिन्तावेशात्स्फुरत्काया निश्चिकायेति चेतसि ॥२५२॥
एकत्र देशे घटिते चैकेन तुलया समे ।
समानलिपिनाम्नी द्वे ऊर्मिके सोदरे इव ॥२५३॥
कुबेरदत्तश्चाहं च तद्वावयूर्मिके इव ।
अत्यन्तं रूपसदृशौ भ्रातृभाण्डे न संशयः ॥२५४॥
अन्यूनाधिकसर्वाङ्गावावां युगलजौ खलु ।
दैवेन कारितौ हन्त विवाहाकृत्यमीदृशम् ॥२५५॥
जनकेन जनन्या वा द्वयोरप्यावयोर्ध्रुवम् ।
समेनापत्यवात्सल्येनोर्मिके कारिते समे ॥२५६॥

---

249 d C pr. manu निधीयते । 251 b D प्रथा चदिय° । 252 चिंतावेशा स्फ° । 254 d A भांडो, C so sec. manu.

सोदरौ यत एवावां तत एव निरन्तरम् ।
नास्मिन्मे पतिधीर्नास्य पत्नीधीर्मय्यजायत ॥२५७॥
कुबेरदत्ता ध्यात्वैवं तथेति कृतनिश्चया ।
करे कुबेरदत्तस्य क्षिपति स्मोर्मिकाद्वयम् ॥२५८॥
कुबेरदत्तो ऽपि तयैवोर्मिकाद्वयदर्शनात् ।
चिन्तामन्तागममासाद्य विषसाद महाशयः ॥२५९॥
ततः कुबेरदत्तायास्तां समर्प्योर्मिकां सुधीः ।
गत्वा दत्त्वा च शपथमिति पप्रच्छ मातरम् ॥२६०॥
किमौरसो ऽपविद्धो वा दत्त्रिमः कृत्रिमो ऽथवा ।
अन्यो वा तव पुत्रो ऽस्मि पुत्रा हि बहुधा किल ॥२६१
आग्रहग्रहिलीभूय पृच्छतस्तस्य चाम्बिका ।
मञ्जूषप्राप्तितः सर्वां कथयामास तां कथाम् ॥२६२॥
कुबेरो ऽप्यवदन्मातः किमकृत्यमिदं कृतम् ।
ज्ञात्वापि युग्मजन्मानावावां यत्परिणायितौ ॥२६३॥
नैव माता वरं माता या पोषयितुमनीश्वरी ।
स्वभाग्यभाजनीकृत्य तत्याजावां नदीरये ॥२६४॥
नदीरयो हि मन्ये ऽस्माकाकृत्यकरणाय तु ।
जीवितान्मरणं श्रेयो न जीवितमकृत्यकृत् ॥२६५॥
व्याजहार जनन्येवं पुत्रयोरतिहारिणा ।
रूपेणात्यनुरूपेण मोहिताः स्मो ऽल्पमेधसः ॥२६६॥

---

259 c A चंभतः । 264 b A पोषयितु°, C पोषेतु° । 265 c D जन्म-भो, A मरो ।

तवानुरूपा नो कन्या तां विना काप्यदृश्यत ।
तस्या अप्यनुरूपस्त्वामृते कोऽपि वरो न हि ॥२६७॥
पाणिग्रहणमेवैकमद्यापि युवयोरभूत् ।
न पुनः पापकर्मान्यत्पुंस्त्रीसम्बन्धसम्भवम् ॥२६८॥
अद्यापि हि कुमारस्त्वं कुमार्यद्यापि सा तथा ।
स्वस्ति तस्यै भ्रातृभाण्डकथामाख्याय मुञ्च ताम् ॥२६९॥
व्यवहाराय दिग्यात्रां चिकीर्षन्नसि सुन्दर ।
क्षेमेण कृत्वा तां शीघ्रमागच्छेरस्तदाशिषा ॥२७०॥
समागतस्य क्षेमेण करिष्ये तव दारक ।
महोत्सवेन वीवाहमन्यया सह कन्यया ॥२७१॥
ततः कुबेरदत्तो ऽपि वदन्नोमिति धर्मधीः ।
गत्वा कुबेरदत्तायै तमाख्याति स्म निर्णयम् ॥२७२॥
ऊचे च पित्रोः सदनं याहि भद्रे भगिन्यसि ।
विवेकिन्यसि दृश्यासि तदयोचितमाचरेः ॥२७३॥
पितृभ्यां वञ्चिताविवमावां किं कुर्वहे स्वसः ।
तयोर्न दोषो ऽयमियमावयोर्भवितव्यता ॥२७४॥
पितरौ हि यथापत्यं विक्रीणन्ति त्यजन्ति वा ।
आज्ञापयन्त्यकृत्ये ऽपि तथा तद्दूष्यकर्मणे ॥२७५॥
कुबेरदत्तस्तामेवमभिधाय विहाय च ।
पण्यभाण्डमुपादाय जगाम मथुरापुरीम् ॥२७६॥

---

273 d C चरः । 275 b C विक्रीणते, d A तु ऋष्यक॰, C तद्दूष्य । 276 c A C पुण्य ।

तत्र च व्यवहारेण सो ऽर्थमत्यर्थमार्जयत् ।
उवास च चिरं स्वैरं विलसन्यौवनोचितम् ॥२७७॥
अन्येद्युर्द्रविणं दत्त्वा रूपलावण्यशालिनीम् ।
कुबेरसेनां गणिकां तां कलत्रीचकार सः ॥२७८॥
कुबेरसेनया सार्धं तस्य वैषयिकं सुखम् ।
भुञ्जानस्य सुतो जज्ञे दैवनाटकमीदृशम् ॥२७९॥

तदा कुबेरदत्तापि गत्वा पप्रच्छ मातरम् ।
मातापि हि तथैवाख्यन्मञ्जूषाप्राप्तितः कथाम् ॥२८०॥
सद्यो निर्वेदमासाद्य स्वकीयकथया तया ।
कुबेरदत्ता प्राव्राजीत्तपस्तेपे च दुस्तपम् ॥२८१॥
तामूर्मिकां तु सङ्गोप्य प्रव्रजन्ती मुमोच सा ।
व्याहार्यौ च प्रवर्तिन्या सहमाना परीषहान् ॥२८२॥
तस्याश्चात्युग्रतपसः प्रवर्तिन्युपदेशतः ।
पुण्यैस्तपोविटपिनो ऽवधिज्ञानमजायत ॥२८३॥
कुबेरदत्तो ऽस्ति कथमिति चिन्तयति स्म सा ।
कुबेरसेनासङ्गत्या सपुत्रं तं ददर्श च ॥२८४॥
अज्ञया सा सुतेनैवमसौ मम सहोदरः ।
अज्ञानपङ्कनिर्मग्नो वराह इव तिष्ठति ॥२८५॥
इति तत्प्रतिबोधार्थमियाय मथुरापुरीम् ।
समेता संयतीभिः सा करुणारससारणिः ॥२८६॥

---

281 d C च for च। 282 a C ज for तु। 285 a D अज्ञया acc. man. 286 d C D सारणि, A सारिणी।

आर्यां कुबेरदत्तापि धर्मलाभपुरःसरम् ।
पार्श्वे कुबेरसेनायाः प्रतिश्रयमयाचत ॥२८७॥
प्रणम्य सेनाप्यवददार्ये ऽहं पणसुन्दरी ।
सम्प्रत्येकपतित्वेन पुनः कुलवधूरिव ॥२८८॥
कुलीनपतिसंसर्गात्कुलस्त्रीवेष एष मे ।
कुलीनाचरितेनापि प्रसादार्हास्मि वः खलु ॥२८९॥
तदितो मद्गृहाभ्यर्णे प्रतिगृह्य प्रतिश्रयम् ।
संनिधिस्था भवत मे सदेष्टा इव देवताः ॥२९०॥
ततश्च सपरीवारा तस्याः कल्याणकामधुक् ।
कुबेरदत्ता तद्दत्तवसतावसत्सुखम् ॥२९१॥
कुबेरसेनाप्यर्भं स्वं तत्रागत्य दिवानिशम् ।
आर्यायाः पादपद्माग्रे लुठन्तममुचद्भुवि ॥२९२॥
बुध्येत यो यथा जन्तुस्तं तथा बोधयेदिति ।
आर्या तत्प्रतिबोधार्थं तं बालमुदलापयत् ॥२९३॥
भ्रातासि तनुजन्मासि वरस्यावरजोऽसि च ।
भ्रातृव्यो ऽसि पितृव्यो ऽसि पुत्रपुत्रो ऽसि चार्भक ॥२९४॥
यश्च ते बालक पिता स मे भवति सोदरः ।
पिता पितामहो भर्ता तनयः श्वशुरो ऽपि च ॥२९५॥
या च बालक ते माता सा मे माता पितामही ।
भ्रातृजाया वधूः श्वश्रूः सपत्नी च भवत्यहो ॥२९६॥

---

292 d A सामुचद्भु । 294 b D ऽपि ।

कुबेरदत्तः तच्छ्रुत्वा जगादार्ये किमीदृशम् ।
परस्परविरुद्धार्थं भाषसे विस्मितो ऽस्म्यहम् ॥२९७॥
आर्याचख्यौ मम बालो ऽयं भ्रातैका जननी यतः ।
वदामि तनुजन्मानममुं मत्पतिसूरिति ॥२९८॥
मद्भर्तुः सोदर इति देवरो ऽपि भवत्यसौ ।
भ्रातुस्तनय इति च भ्रातृव्यं कीर्तयाम्यमुम् ॥२९९॥
पितृव्यस्त्वेष भवति भ्राता मातृपतेरिति ।
पुत्रः सपत्नीपुत्रस्येत्यसौ पौत्रो ममोदितः ॥३००॥
यो ऽस्य वप्ता स मे भ्राता माता ह्येका यदावयोः ।
अस्य मातश्च मे तातो भर्ता मातुरभूदिति ॥३०१॥
पितृव्यस्य पितेत्येनमुद्दीपयामि पितामहम् ।
परिणीताहममुना स्वामीति पतिरेव मे ॥३०२॥
ममैष तनुजन्मा सपत्नीकुक्षिभूरिति ।
देवरस्य पितेत्येष भवति श्वशुरो ऽपि हि ॥३०३॥
यास्याम्बा सा ममाप्यम्बा तया जातास्म्यहं यतः ।
पितृव्यकस्य मातेति मम सापि पितामही ॥३०४॥
भ्रातृजायापि भवति मद्भ्रातुर्गेहिनीत्यसौ ।
सपत्नीतनयस्यैषा गेहिनीति वधूरपि ॥३०५॥
माता पत्युर्मदीयस्येत्यसौ श्वश्रूर्ममेयम् ।
भर्तुर्भार्या द्वितीयेयमिति जाता सपत्न्यपि ॥३०६॥

---

297 c A परस्परं । 299 b B भ्रातरो, d D भ्रा॰कीर्तयाम्यहं । 301 c C मातश्च । 306 d C सपत्न्यपि ।

इत्युक्त्वा सार्पयामास स्वां कुबेराय मुद्रिकाम् ।
तां दृष्ट्वा सो ऽपि तं सर्वं जज्ञे सम्बन्धविप्लवम् ॥३०७॥
कुबेरदत्तः संवेगमासाद्य प्राव्रजत्तदा ।
तपस्तप्त्वा च मृत्वा च स्वर्वधूनामतिथ्यभूत् ॥३०८॥
कुबेरसेनापि तदा श्राविकात्वमशिश्रियत् ।
आर्या प्रवर्तिनीपार्श्वं पुनरेव जगाम सा ॥३०९॥

एवं च यः स्वयमपि कर्मणा हन्त बध्यते ।
शुक्ताविव रजतधीर्मूढानां स च बन्धुधीः ॥३१०॥
यः स्वयं बन्धुरहितो ऽन्येषां यो बन्धुमोचकः ।
स क्षमाश्रमणो बन्धुरन्ये नाम्नैव बान्धवः ॥३११॥

भूयो ऽपि प्रभवः प्रोचे भो कुमार निजान्पितॄन् ।
दुर्गतौ पततस्त्रातुं पुत्रमुत्पादयात्मनः ॥३१२॥
पितरो यान्ति नरके ऽवश्यं संतानवर्जिताः ।
तदसञ्जातपुत्रस्त्वं पितृणाम्मुच्यसे न हि ॥३१३॥
जम्बूर्जगाद मोहो ऽयं यत्पुत्रात्पितृतारणम् ।
भो महेश्वरदत्तो ऽत्र सार्थवाहो निदर्शनम् ॥३१४॥

3. तथा हि ताम्रलिप्ताख्यपुर्यां सार्थपतिः पुरा ।
श्रीमानजायत महेश्वरदत्तो ऽभिधानतः ॥३१५॥
तस्य चाभूज्जनयिता समुद्रो नाम विश्रुतः ।
अजाततृप्तिर्वित्तेषु समुद्र इव वारिषु ॥३१६॥

---

311 a D बंध°, b A D बंध°। 314 b D सर्वेषं। 315 a b D ताम्रलिप्ताख्यपुर्यां।

मायाप्रपञ्चबहुला बकुला नामा तस्य च ।
अर्थमात्रेव माताभूदजातविपुलाशया ॥३१७॥
लोभाकरगर्तो ऽर्थसञ्चयव्यसनी स तु ।
पिता तस्य विपद्याभूद्देशे तत्रैव सैरिभः ॥३१८॥
पत्युश्च मरणादार्त्तध्यानानलपतङ्गताम् ।
जग्मुषी तस्य मातापि मृत्वा तत्रैव शुन्यभूत् ॥३१९॥
महेश्वरस्य गृहिणी नामधेयेन गाङ्गिला ।
महेश्वरस्य गौरीवाभवत्सौभाग्यजन्मभूः ॥३२०॥
श्वश्रूश्वशुरहीना च वसत्येकाकिनी गृहे ।
स्वच्छन्दचारिण्यभवदरण्ये हरिणीव सा ॥३२१॥
पतिं वञ्चयमाना च रेमे पुंसा परेण सा ।
एकाकिनीनां नारीणां सतीत्वं हि कियच्चिरम् ॥३२२॥
एकाकिनीं रहस्याश्च दृष्ट्वा मकरकेतनः ।
योषितो हि प्रहरति निर्भीक इव निर्भरम् ॥३२३॥
तस्यां च रममाणायां परपुंसा निरङ्कुशम् ।
अकस्मादन्यदा द्वारदेशमभ्यागान्महेश्वरः ॥३२४॥
पुंश्चल्युपपती दृष्ट्वा तौ च विस्मयाकुलितौ ।
रतायामभयौ कम्प्रजङ्घावुद्भ्रान्तलोचनौ ॥३२५॥
परामर्शात्तसंज्ञानावसहीनोत्तरीयकौ ।
गमनायौ स्खलत्पादौ कान्दिशीकौ बभूवतुः ॥३२६॥ युग्मम् ॥

---

318 a A °करणो । 319 A भूम c यमः । 324 c A द्वारे° ।
325 b C मं॰, c A चपला D चपलाम् ।

जारं केशेषु दध्रे ऽथ भल्लूकमिव लुब्धकः ।
जघान च चपेटाभिर्भूतार्त्तमिव मान्त्रिकः ॥३२७॥
ममर्द पादघातैश्च मृत्पिण्डमिव कुम्भकृत् ।
यष्ट्या चाताडयद्वेश्मप्रविष्टमिव कुक्कुरम् ॥३२८॥
किं बहुनार्धपरासुमिव चक्रे महेश्वरः ।
चौरे ऽपि न तथा कोपो यथा जारे मनस्विनाम् ॥३२९॥
महेश्वरेण रुष्टेन कृतान्तस्येव बन्धुना ।
सो ऽथार्धमारितो जारः प्रणश्य कथमप्यगात् ॥३३०॥
स्तोकं च गत्वा पतितो गाङ्गिलोपपतिः स तु ।
कण्ठोपकण्ठारूढेषु प्राणेष्विदमचिन्तयत् ॥३३१॥
धिग्धिग्मुमूर्षुरेवाहमकार्षं कर्म गर्हितम् ।
मत्कामदं तीर्थमिव युक्तं मृत्यै ममाभवत् ॥३३२॥
एवं च चिन्तयञ्जारो मृत्वा वीर्ये स्व एव हि ।
द्राग्भुक्तगाङ्गिलाकुक्षौ पुत्रभूयमियाय सः ॥३३३॥
समये सुषुवे सूनुं गाङ्गिलाथ महेश्वरः ।
कुण्डमप्यात्मजनितं मन्वानस्तमलालयत् ॥ ३३४॥
तस्याः प्रसूतपुत्राया गाङ्गिलाया महेश्वरः ।
पुत्रप्रेम्णा व्यस्मरत्तं पुंश्चलीदोषमागतम् ॥३३५॥
तस्योपपतिजीवस्य पुत्रमूर्तेर्महेश्वरः ।
धात्रीकर्माणि कुर्वाणो न जिह्राय प्रमोदभाक् ॥३३६॥

---

328 d C कुक्कुरं A B D कुर्कुरं । 333 b A B D बीजे । 333 c C प्राग्भुक्त ।

वर्धमानं च तं कूर्चकचाकर्षकमर्भकम् ।
हृदयाग्रे स्थितं दध्रे पदार्थमिव तद्गुणः ॥३३७॥
महेश्वरो ऽन्यदा प्राप्ते पितुर्मरणवासरे ।
महिषं पितृजीवं तमक्रीणात्तत्पलेच्छया ॥ ३३८॥
पितृवासरपर्वार्थं महिषं तममारयत् ।
स्वयं चासृग्भिरुन्मुद्रप्रमोदपुलकाङ्कुरः ॥ ३३९॥
ततश्च माहिषं मांसं चामीकुर्वन्महेश्वरः ।
अङ्कस्थायार्भकायापि ददौ तस्मै प्रमोदभाक् ॥३४०॥
तन्माता च शुनी मांसलुब्धा तत्राभ्युपासरत् ।
समांसान्यस्थिखण्डानि सो ऽपि चिक्षेप तत्कृते ॥३४१॥
स्वकीयपतिजीवस्य कीकसानि जघास सा ।
पुच्छेन नृत्यता वाताहतधूमशिखायितम् ॥३४२॥
समुद्रसूनोरेवं च खादतः पितृजाङ्गलम् ।
मासक्षपणभिक्षार्थी तत्रैको ऽभ्याययौ मुनिः ॥३४३॥
ज्ञानातिशयसम्पन्नः सर्वं विलसितं मुनिः ।
विदाञ्चकार च महेश्वरदत्तस्य तादृशम् ॥३४४॥
अचिन्तयच्च धिगहो ऽस्याज्ञानं तपस्विनः ।
यदश्नाति पितुर्मांसमङ्के च वहति द्विषम् ॥३४५॥
कीकसानि समांसानि यच्छन्नन्तर्हर्षभाक् ।
अश्नाति सारमेयीयमहो संसार ईदृशः ॥३४६॥

---

337 a A माहेश्वरो । 337 c C पितुर्म° । 338 a A पर्वार्थं D पर्वे ।
343 b B [illegible] C [illegible] changed to [illegible] ।

सम्यगेवं परिज्ञाय निर्ययौ तद्गृहान्मुनिः ।
महेश्वरो ऽपि धावित्वा वन्दित्वा च तमब्रवीत् ॥३४७॥
अनात्तभिक्षो भगवन्किं निवृत्तो ऽसि मद्गृहात् ।
न ह्यभक्तो ऽहं नावज्ञामकार्षं चपुलो ऽस्मि च ॥३४८॥
मुनिरूचे विहरे ऽहं न मांसादस्य सद्मनि ।
ततो नाग्रहिषं भिक्षां संवेगो ऽभूच्च मे महान् ॥३४९॥
किं कारणमिति पृष्टः साग्रहेण मुनिः स तु ।
कथयामास महिषशुन्यादीनां कथां तथा ॥३५०॥
को नाम प्रत्यय इति पृच्छन्तं च महेश्वरम् ।
मुनिरूचे पृच्छ शुनीं प्राग्निखातं किमप्यहो ॥३५१॥
तथा पृष्टा शुनी तेन निधानस्थानमंह्रिणा ।
चखान प्रत्ययार्थमिव क्षितिं जातिस्वभावतः ॥३५२॥
उत्पन्नप्रत्ययः सो ऽथ भवोद्विग्नो महेश्वरः ।
परिव्रज्यामुपादत्त दत्त्वा पात्रेषु सम्पदम् ॥३५३॥
तस्मात्प्रभव को नाम निश्चयो वदतां वर ।
तार्यन्ते दुर्गतिह्रदाद्यन्मातापितरः सुतैः ॥३५४॥

4. अत्रान्तरे समुद्रश्रीर्जम्बूनामानमब्रवीत् ।
पश्चात्तापं मा स्म गास्त्वं स यथा नाथ कर्षकः ॥३५५॥
तथा हि पृथ्वीप्रथिते ग्रामे नाम्ना सुसीमनि ।
कर्षको धनधान्यादिसमृद्धो बक इत्यभूत् ॥३५६॥

---

355 b A C D °र्जंबू।

प्राप्ते च वर्षासमये स कङ्गूः कोद्रवानपि ।
वपति स्म महारम्भः क्षेत्रे कृष्टमतीकृते ॥३५७॥
उद्गतैः श्यामलदलैस्तैर्धान्यैः क्षेत्रभूरभूत् ।
अभिखोटितकाचेव जातकेशोच्चयेव च ॥३५८॥
तत्कङ्गुकोद्रववनं वर्धमानमुदीक्ष्य सः ।
मुदितः क्वाप्यगाद्ग्रामे दविष्ठे स्वजनातिथिः ॥३५९॥
स्वजनैर्भोजने तस्य प्रदत्ता गुडमण्डकाः ।
अपूर्वेण तदाहारेणात्यन्तं च स पिप्रिये ॥३६०॥
ज्ञातीन्प्रीतश्च सो ऽपृच्छदहो वः साधु जीवितम् ।
मनोहरो ऽयमाहारो येषां सुष्ठु सुधोपमः ॥३६१॥
स्वप्ने ऽप्याहारमीदृक्षमद्राक्षं न कदापि यत् ।
कङ्गुकोद्रवदग्धान्नान्निगमान्नृपशूनमून् ॥३६२॥
पप्रच्छ च ततो ज्ञातीनज्ञातगुडमण्डकः ।
इमान्याहारवस्तूनि कानि वा क्व भवन्ति च ॥३६३॥
ते तस्मै कथयामासुररघट्टजलेन भोः ।
क्षेत्रेषु सिक्तेषूप्यन्ते गोधूमा अन्यधान्यवत् ॥३६४॥
तेषां पाकिमसूनानां पिष्टानां च घरट्टकैः ।
पच्यन्ते वह्नितप्तायामयस्थाल्यां हि मण्डकाः ॥३६५॥
इक्षवो ऽपि तथोप्यन्ते तेषां वृद्धिमुपेयुषाम् ।
निपीडनादुपात्तेन रसेनोत्पद्यते गुडः ॥३६६॥

---

358 a A अभिषोटित । 359 a C °कोद्रववन । 365 a A पक्किम ।
365 b C °मयस्थाल्यां । 366 c A निपीड° ।

गुडमण्डकनिष्पत्तिं विज्ञायैवं कृषीवलः ।
स उपात्तेक्षुगोधूमबीजो ग्रामं निजं ययौ ॥३६७॥
ततश्च गत्वा स क्षेत्रे फलितं कङ्गुकोद्रवम् ।
बको लवितुमारेभे रभसान्माहग्रामितः ॥३६८॥
ऊचे च पुत्रैः किं तातार्धनिष्पन्नामिमां कृषिम् ।
स्वकुटुम्बकजीवातुं लुनीषे क्षणमाचवत् ॥३६९॥
बकः प्रोवाच हे पुत्राः किमेभिः कोद्रवादिभिः ।
वप्स्याम्यथेक्षुगोधूमान्खाद्या हि गुडमण्डकाः ॥३७०॥
पुत्राः प्रोचुर्दिनैः स्वल्पैर्निष्पत्स्यन्ते कणा अमी ।
तानादायेक्षुगोधूमान्वपेस्तात यथारुचि ॥३७१॥
निष्पन्नेयं कृषिर्याति गोधूमेक्षुषु संशयः ।
कटिस्थे गच्छति शिशौ का प्रत्याशोदरस्थिते ॥३७२॥
एवं निवार्यमाणो ऽपि बकस्तैस्तनुजन्मभिः ।
लुलाव कोद्रवकङ्गुवनं तच्च प्रभुर्हि सः ॥३७३॥
प्रलूय तानि शस्यानि स देवानांप्रियो बकः ।
चकार गोलिकाक्रीडोचितां तां क्षेत्रमेदिनीम् ॥३७४॥
ततश्च खानयामास स कूपं पार्श्वगः स्वयम् ।
तस्मात्तु निरगान्नाम्भः स्तन्यं वन्ध्यास्तनादिव ॥३७५॥
खानं खानमनिर्विण्णं पातालविवरोपमम् ।
अकारयद्बकः कूपं न तु पङ्को ऽपि निर्ययौ ॥३७६॥

---

371 b C निष्पत्स्यन्ति D निपत्स्यंते । 374 a C प्रभय । 374 c A गोलका ।
375 b A पार्श्वगं, d A C वन्ध्या । 376 a D विर्विंन्न ।

ततस्तथाभवन्नैव कङ्गवो न च कोद्रवाः ।
नेक्षवो न च गोधूमाः पश्चात्तापं लियाय सः ॥३७७॥
ऐहिकं स्त्रीधनसुखं त्यजन्नामुष्मिकं पुनः ।
संशयास्पदमाकाङ्क्षंस्तदन्ना भूद्द्वयोज्झितः ॥३७८॥

5. जगाद जम्बूनामापि स्मयमानो महामनाः ।
निर्बुद्धिर्वै समुद्रश्रीर्नाहमप्यस्मि काकवत् ॥३७९॥
तथा हि नर्मदाकूले विन्ध्याटव्यां महागजः ।
एको यूथपतिरभूद्विन्ध्याद्रेर्युवराडिव ॥३८०॥
स्वच्छन्दं विहरन्विन्ध्ये व्यतीयाय स यौवनम् ।
आयुर्नदीपारनिभमाससाद च वार्धकम् ॥३८१॥
अभ्रकुन्दन्तघाताङ्कतुं दीर्णवलन्तरी ।
मदोज्झितो गिरिरिव पीभर्तो शुष्कनिर्झरः ॥३८२॥
शल्लकीकर्णिकाराद्विवनभङ्गपराङ्मुखः ।
छायाप्रिये निम्नघोषेऽवतारोत्तारकातरः ॥३८३॥
दन्तपातादल्पभोक्ता क्षामकुक्षिर्बुभुक्षया ।
अक्षिभ्यामदृक्छायो वार्धके सोऽभवद्द्विपः ॥३८४॥
॥ त्रिभिर्विशेषकम् ॥
क्षुधार्तः सोऽन्यदा शुष्कगिरिनद्यां समुत्तरन् ।
पर्यस्तपादो न्यपतत्कूटमेकं गिरेरिव ॥३८५॥
स शरत्सु धरत्तत्र नाभूदुत्थातुमीश्वरः ।

---

379 a D निर्बुद्धेर्वे समुद्रश्रि । 381 c A नदीपूर । 383 a A B C षष्ठ्यौ ।

तथैवास्थात्पादपोपगमनं पालयन्निव ॥३८६॥
स विपेदे तथास्थो ऽपि विपेदानस्य तस्य तु ।
अपानपललं जग्धुः श्वफेरुनकुलादयः ॥३८७॥
बभूव तन्मदङ्कूतापानरन्ध्रकलेवरम् ।
सकन्दरगिरिप्रायं श्वापदैरास्पदीकृतम् ॥३८८॥
अपानसत्त्रशालायां द्विकास्तस्यां द्विजा इव ।
विविशुस्ते निरीयुश्चानेकशो भोजनार्थिनः ॥३८९॥
एकस्य वायसो ऽत्यन्तमसक्तो मांसभोजनात् ।
अपानमध्य एवास्थादुत्पन्न इव विट्कृमिः ॥३९०॥
करिकायस्य तस्यान्तः सारमासादयन्न तु ।
काष्ठस्येव घुणो मध्ये प्रविवेशाधिकाधिकम् ॥३९१॥
सशरीरः परपुरे प्रवेशं नाटयन्भृशम् ।
अपूर्वो योगविदभूदनायासः स वायसः ॥३९२॥
लूतेव करिकायस्य सो ऽश्नन्नव्ययमामिषम् ।
पूर्वापरविभागज्ञो बभूवात्यन्तमध्यगः ॥३९३॥
दिवाकरकराक्रान्तं करिकायस्य तस्य तु ।
संचुकोचाथापानरन्ध्रं शुष्कविष्टं पुरा यथा ॥३९४॥
काको ऽथ संवृतापानरन्ध्रे करिकलेवरे ।
बद्धद्वारे करण्डे ऽहिरिव तस्थौ तथैव सः ॥३९५॥
करिकायः स मेघौघैः सरिता वारिपूर्णया ।

390 d B C D तदुत्पन्न इव कृमिः । 392 a A सशरीरं । 395 a A षद्वा॰ ।

तरङ्गहस्तैराकृष्य नर्मदायामनीयत ॥३९६॥
तत्प्रवहणमिव तत्कुञ्जरकलेवरम् ।
रेवयानायि जलधौ तत्क्षणमिवापदा ॥३९७॥
तस्मात्कलेवराच्छिद्यमानात्प्रविशदम्भसः ।
वारिणेव क्षतद्वारान्निर्जगाम स वायसः ॥३९८॥
तत्रान्तरीयमायस्योपरिष्टात्करिवर्ष्मणः ।
निपत्य वायसश्चक्रे विष्वग्दिगवलोकनम् ॥३९९॥
अग्रतः पार्श्वयोः पश्चान्नीराद्वैतं ददर्श सः ।
दध्यौ चोड्डीय यास्यामि तीरं नीरनिधेरहम् ॥४००॥
उड्डीयोड्डीय च प्राप न प्रान्तं वार्धिवारिणः ।
भूयो भूयो ऽपि तत्रैव निपपात कलेवरे ॥४०१॥
आक्रम्यमाणमभितस्तिमीनमकरादिभिः ।
सद्यो निमज्जति स्माब्धौ भाराक्रान्तेव मज्जिनी ॥४०२॥
निममज्ज द्विकः सो ऽपि पयोराशौ निराश्रयः ।
प्राणैश्च मुमुचे सद्यो जलास्रावभयादिव ॥४०३॥
ततो निपन्नवन्येभसन्निभा हि पुरन्ध्रयः ।
संसारः सागरप्रायः पुरुषो वायसोपमः ॥४०४॥
एतास्तु रागवान्दन्तिकलेवरनिभास्ततो ।
नाहं काक इवामुष्मिन्मंक्ष्यामि भवसागरे ॥४०५॥
6. अथ प्रोवाच पद्मश्रीरग्रमाग्राय समुत्सृजन् ।
मां वानर इवात्यन्तमनुतापमवाप्स्यसि ॥४०६॥

401 a A च प्राप । 401 d A C वहेभ ।

तथा स्फुटव्यामेकस्यामन्योन्यमनुरागिणौ ।
वानरो वानरी चास्तां सदा विरहवर्जितौ ॥४०७॥
युगपद्बुभुजाते तौ मिथो वेलाधराविव ।
युगपच्चारुरुहतुः स्पर्धमानाविव द्रुमम् ॥४०८॥
एकरज्ज्वाकृष्टाविव युगपच्च दधावतुः ।
युगपच्चक्रतुः सर्वमेकचित्ताविवानिशम् ॥४०९॥ युग्मम्॥
रेमाते जाह्नवीतीरवानीरे तौ परेद्यवि ।
प्लवमानः प्लवङ्गस्त्वनवधानो ऽपतद्भुवि ॥४१०॥
प्रभावात्तस्य तीर्थस्य क्षणादपि स वानरः ।
मर्त्यो ऽमरकुमाराभो ऽभवद्विद्याबलादिव ॥४११॥
वानरी वानरं तं तु दृष्ट्वा प्राप्तं नृरूपताम् ।
स्त्रीरूपेच्छुर्जहौ प्राणान्वानरस्यैव वर्त्मना ॥४१२॥
ततश्च वानरी नारी द्रागभूदमरीनिभा ।
नवीभूतेन च प्रेम्णा तं नरं परिषस्वजे ॥४१३॥
विलेसतुश्च प्राग्जन्मवानराविव तौ नरौ ।
अविप्रयुक्तावनिशं निशाचन्द्रमसाविव ॥४१४॥
वानरो यो नरीभूतो नारीं प्रोवाच सो ऽन्यदा ।
आवां देवीभवावो ऽद्य मर्त्यीभूतौ यथा पुरा ॥४१५॥
नार्यूचे प्रिय पर्याप्तमसन्तोषेण भूयसा ।
मनुष्यरूपावेवावां विषयानुपभुञ्ज्वहे ॥४१६॥

---

410 a A B तीरे। 411 b D °द्विद्यादपि। 415 d C पुरे।
416 d Mss. °भुंज्वहे।

देवत्वेनास्तु देवत्वादधिकं ह्यावयोः सुखम् ।
नित्यावियुक्तौ निर्विघ्नमनिशौ यद्रमावहे ॥४१७॥
तथैवं वार्यमाणो ऽपि स वानरवरो नरः ।
वानीरादुच्चकैर्झम्पां ददौ तत्रैव पूर्ववत् ॥४१८॥
स च तिर्यङ्मर्त्यीभूतो देवीभूतश्च मानवः ।
तीर्थप्रभावात्तादृक्षौ स्यातां चेत्पततः पुनः ॥४१९॥
इति तत्रैव हि तीर्थे स झम्पां दत्तवानपि ।
प्राग्जन्मवानरत्वेन वानरः पुनरप्यभूत् ॥४२०॥
राकानिशाकरमुखीं कम्बुकण्ठीमुरुस्तनीम् ।
तनूदरीं वरारोहां पद्मोपमकरक्रमाम् ॥४२१॥
गङ्गाम्बुस्नाततिलकां लतार्धयतकुन्तलाम् ।
स्फुरत्पोतकोमलांसां तालिकादलकुण्डलाम् ॥४२२॥
कण्ठस्थनलिनीनालहारां हरिणचक्षुषीम् ।
तामीक्षाञ्चक्रिरे ऽन्वेषुर्भ्रमन्तो राजपूरुषाः ॥४२३॥

॥ त्रिभिर्विशेषकम् ॥

राज्ञे समर्पयामासुस्तामुपादाय ते नराः ।
यद्यदस्वामिकं तत्तत्सर्वं भवति राजसात् ॥४२४॥
राज्ञा दिव्याकृतिश्चक्रे सान्तःपुरशिरोमणिः ।
लक्ष्मी लावण्यवत्या ह्याकृतेरतिशयः खलु ॥४२५॥
वानरः सो ऽपि जगृहे कैश्चित्तत्रागतैर्नरैः ।
नाट्यं विविधभङ्गीकं पुनश्चाशिक्षितस्तैः ॥४२६॥

417 a A देवत्वेनास्तु । 422 a A मेना, b A D चंदन, d C नालिका ।

ते नटायान्यदा जग्मू राज्ञस्यैव सन्निधौ ।
वानरं नर्तयन्तस्तं चक्रुश्च प्रेक्षणीयकम् ॥४२७॥
अरोदीद्वानरो राज्ञो ऽग्रासने प्रेक्ष्य तां प्रियाम् ।
अश्रुपातैः सात्त्विकाभिनयं प्रकटयन्निव ॥४२८॥
राज्ञ्यूचे यो यथा कालः कपे सेवस्व तं तथा ।
मा वञ्जुलपरिभ्रष्टः साम्प्रतं पतनं स्मर ॥४२९॥
तस्मात्त्वमपि सम्प्राप्तमुज्झन्वैषयिकं सुखम् ।
पश्चात्तापपरः पश्चान्मा भूः स इव वानरः ॥४३०॥

7. जम्बूनामा जगादैवं पद्मश्रीरपि न ह्यहम् ।
विषयेष्वस्मि तृषितो यथा ह्यङ्गारकारकः ॥४३१॥
तथा हि कश्चिदङ्गारकारको ऽगान्महाटवीम् ।
अङ्गारान्कर्तुमुष्णर्तौ पातुमात्तबहूदकः ॥४३२॥
कुर्वन्नाङ्गारिको ऽङ्गारान्सो ऽग्नितापेन भूयसा ।
तथा तपनतापेन तप्तो ऽत्यन्ततृषो ऽभवत् ॥४३३॥
वराको वर्षसेकेन पानेन च मुहुर्मुहुः ।
स वन्यो वारण इव वारि सर्वं न्यतिष्ठिपत् ॥४३४॥
जलेन निखिलेनापि तस्य ह्यङ्गारकारिणः ।
तृषाग्निस्तैलवन्नैव प्रशशाम मनागपि ॥४३५॥
निपाने जलपानाय चचालाङ्गारकारकः ।
यावत्तावत्तृषार्तो ऽर्धमार्गे ऽपि निपपात सः ॥४३६॥

---

429 b C कपे । 431 d D तृषा । 435 c A तृषाग्निः । 436 a C पानीय ।

स पिपासुर्दैवयोगाच्च कस्याप्यध्वतरोरधः ।
पपाताध्वश्रमाच्छायायां शैत्यमातरि ॥४३७॥
तरोस्तले शीतलया छायया प्यायितः स तु ।
उपलेभे मनाग्निद्रां सुखवारितरङ्गिणीम् ॥४३८॥
वापीकूपतडागादीन्स्वप्ने सर्वाञ्जलाश्रयान् ।
मन्त्रप्रयुक्ताग्नेयेषुरिव शोषयति स्म सः ॥४३९॥
तथाप्यविच्छिन्नतृषो दैन्यभाक्स उदन्यया ।
भ्रमन्नेकं जरत्कूपं पङ्किलाम्भसमैक्षत ॥४४०॥
तज्जलं पूलकैर्लातुमशक्तो जिह्वया लिहन् ।
दारुस्त्रीव नातृप्यत्तथापि स कथंचन ॥४४१॥
तज्जीवो ऽङ्गारकमुख्यो वाप्यादिजलसन्निभाः ।
त्रिदशत्वान्तरादीनां भोगाः प्रियतमे खलु ॥४४२॥
स्वर्गादिसौख्यैरपि यो जीवस्तृप्तिमियाय न ।
मनुष्यैर्भोगैः स कथं तृप्येत्तदापदं कृपाः ॥४४३॥
उवाच पद्मसेनाथ परिणामः शरीरिणाम् ।
ममाधीनस्ततो भुङ्क्ष्व भोगान्युक्तान्यथा कृतम् ॥४४४॥
पटवः सन्ति दृष्टान्ताः प्रवर्तकनिवर्तकाः ।
नूपुरः पण्डितायाश्च गोमायोश्च कथा यथा ॥४४५॥
8. तथा हि नगरे राजगृहे ऽभूत्स्वर्णकारकः ।
देवदत्तोऽभिधानेन देवदिन्नस्य तनुजः ॥४४६॥

437 a A B C पिपासुर्दै°, D पिपासु, A corr. in पिपा°, C in पस°। c D पाताध्व°, A C पाताध्व°, d A शैत्यनि। 441 d C नातृप्यत्। D नातृप्यत्तथा। 445 d B पर्वतकनिवर्तका, c D नूपुरं।

गृहिणी दुर्गिला नाम देवदिन्नस्य चाभवत् ।
एका लोकासु धौरेयी सौभाग्यस्य महानिधिः ॥४४७॥
जगाम सान्यदा नद्यां जलमज्जनहेतवे ।
क्षोभयन्ती मनो यूनां कटाक्षैर्मन्मथेषुभिः ॥४४८॥
सर्वाङ्गहेमाभरणा भान्ती वासोभिरुज्ज्वलैः ।
नदीनीरमलञ्चक्रे सा मूर्त्तेवाम्बुदेवता ॥४४९॥
दुर्गभूमिं स्मरस्येव दर्शयन्ती स्तनद्वयम् ।
शनैरुत्तारयामास सा कञ्चुकमुरुस्तनी ॥४५०॥
कञ्चुकं सोत्तरीयं च वयस्यायाः समर्प्य तु ।
तन्वङ्गी तिरयामास संव्यानार्धेन सा कुचौ ॥४५१॥
विदग्धालीजनालापैर्दग्धा जीवितमन्मथा ।
मन्दं मन्दं मरालीव तीरान्नीरं विवेश सा ॥४५२॥
तरङ्गहस्तैरुत्क्षिप्तैर्दूरादपि तरङ्गिणी ।
तामालिलिङ्ग सर्वाङ्गं चिरादृष्टां सखीमिव ॥४५३॥
चलत्तारङ्गनयना सा चिक्रीडिषुरम्भसा ।
नौरिवारित्रदण्डाभ्यां पाणिभ्यां वार्यदारयत् ॥४५४॥
तस्याः स्वाम्भाश्चिरं वारि विकिरन्त्याः कुतूहलात् ।
शुशुभाते चलौ पाणी नृत्यदम्भोजविभ्रमौ ॥४५५॥
सार्द्रैकवस्त्रा विस्रस्तकेशा धौतरदच्छदा ।
रतोत्थितेव साराचि जलक्रीडापरायणा ॥४५६॥

---

447 c D धारेयी । 449 d A वायदेवता । 451 c D sec. m. तरिया-
मास । 452 b D दग्धो जीवति ।

तां क्रीडन्तीं नदीमध्ये वार्धिमध्ये सुरीमिव ।
ददर्श नागरयुवा दुःशीलः को ऽपि पर्यटन् ॥४५७॥
तां जलक्लिन्नसूक्ष्मैकवसनाच्छादितामपि ।
सुव्यक्तसर्वावयवां दृष्ट्वा क्षोभात्पपाठ सः ॥४५८॥
सुस्नातं ते नदी पृच्छत्यमी पृच्छन्ति चाङ्घ्रिपाः ।
पृच्छाम्यहं च त्वत्पादपद्मयोर्निपतन्नपि ॥४५९॥
साप्यपाठीत्स्वस्ति नद्यै चिरं नन्दन्तु चाङ्घ्रिपाः ।
सुस्नातपृच्छकानां च करिष्यामि समीहितम् ॥४६०॥
मनोरथलतोद्भेदे सुधासेकोपमं वचः ।
तस्याः श्रुत्वा तथैवास्थाद्रुद्धो राजाज्ञयेव सः ॥४६१॥
चिन्तयंश्च केयमिति स एकस्य तरोरधः ।
ददर्शोर्ध्वमुखान्बालान्फलपाताभिकाङ्क्षिणः ॥४६२॥
ततश्च स युवा लोष्टैस्तच्छाखाः प्रताडयन् ।
फलानि पातयामास झटत्झटिति भूतले ॥४६३॥
यथेष्टं तत्फलप्राप्तिहृष्टान्पप्रच्छ सो ऽर्भकान् ।
नद्यां मज्जनसक्तेयं नारी कास्या निकेतनम् ॥४६४॥
ते ऽर्भकाः कथयामासुर्देवदत्ताभिधस्य भोः ।
स्नुषा सार्थभृत इयमितश्चास्या निकेतनम् ॥४६५॥
दुर्गिलापि युवानं तं ध्यायन्त्येकेन चेतसा ।
विहाय मज्जनक्रीडां सद्यः स्वसदनं ययौ ॥४६६॥

---

458 b D [illegible]° । 462 a A [illegible]° ।

कस्यां रात्रौ दिने कस्मिन्क्व प्रदेशे क्व वा क्षणे ।
आवां मिलिष्याव इति तौ दध्यतुरहर्निशम् ॥४६७॥
वियोगार्त्तौ युवानौ तौ मिथःसङ्गमकाङ्क्षिणौ ।
चक्रवाकाविव चिरमनुरक्तावतिष्ठताम् ॥४६८॥
स युवा तापसीमेकां पुंश्चलीकुलदेवताम् ।
भोजनादिभिराराध्यार्थयाञ्चक्रे परेद्यवि ॥४६९॥
देवदत्तानुपाध्यायस्य मम चान्योन्यरक्तयोः ।
साक्षान्नियतिदेवीव शीघ्रं घटय सङ्गमम् ॥४७०॥
स्वयं दूतीभूय पुरा सा सुभ्रूर्भाषिता मया ।
सङ्गमं मे प्रपन्नास्ति सुकरं तव सम्प्रति ॥४७१॥
प्रतिपद्य करोमीति सद्यः सा तापसी ययौ ।
सदनं देवदत्तस्य भिक्षादम्भेन धीमती ॥४७२॥
स्थालीतलकदानेन व्यापृतां स्वर्णकृद्वधूम् ।
सा परिव्राजिकाद्राक्षीन्मङ्क्षु तामित्युवाच च ॥४७३॥
मन्मुखेन रिरंसुस्त्वां युवैको मूर्तमन्मथः ।
प्रार्थयन्नस्ति विशालाक्षि मा विलक्षीकृथाः स्म माम् ॥४७४॥
रूपेण वयसा बुद्ध्या वैदग्ध्याद्यैर्गुणैरपि ।
आत्मानुरूपमासाद्य तं कृतार्थय यौवनम् ॥४७५॥
नद्यां स्नान्तीं यदा भद्रे ऽद्राक्षीत्त्वां स तदाद्यपि ।
त्वद्गुणोद्गानवातूलो ऽन्यस्त्रीनामापि वेत्ति न ॥४७६॥

---

473 a B जलक । 474 b MSS मूर्त्ति । 476 a A नद्यादा for यदा, c A बतेभ्यो for वातूलो ।

गोप्तुं हृदयभावं स्वं दुर्गिलापि हि धीमती ।
तां परिव्राजिकामेवं कद्वचरमतर्जयत् ॥ ४७७ ॥
किं मुण्डे पीतमुण्डासि यदेवमभिभाषसे ।
कुलीनैष्वकुलीनाहं किमनर्हेऽसि कुट्टिनी ॥ ४७८ ॥
आस्यजास्मद्गृहद्वोरयं भव लुब्धदर्शना ।
दर्शनेनापि ते पापं भाषणेन तु का कथा ॥ ४७९ ॥
निर्भर्त्सिताया गच्छन्त्यास्तस्याः पृष्ठे तु दुर्गिला ।
सौधभित्ताविव ददौ मषीमलिनहस्तकम् ॥ ४८० ॥
तदाशयमजानाना विलक्षा सा तपस्विनी ।
गत्वा समूचे दुःशीलपुरुषं परुषाक्षरैः ॥ ४८१ ॥
आस्तामेवं मृषावादीर्यन्मय्येवानुरागिणी ।
सा क्षुद्रमतीगर्वा शुनीमिव ततर्ज माम् ॥ ४८२ ॥
मम दूत्यं सुधा मुग्ध तथाभूत्कुलयोषिति ।
भित्तौ हि चित्ररचना चतुरस्रापि जृम्भते ॥ ४८३ ॥
मषीमलिनहस्तेन गृहकर्मविहस्तया ।
तया कुपितया पृष्ठे चाहतास्मि चपेटया ॥ ४८४ ॥
इत्युक्ता दुर्गिलादत्तकज्जलश्यामकाङ्कितम् ।
धूर्तप्रष्ठाय पृष्ठं स्वं दर्शयामास तापसी ॥ ४८५ ॥
स दृष्ट्वा कृष्णपक्षस्यां सा सङ्केतमदाद् ध्रुवम् ।
पश्चाद्गुलिर्मषीहस्तः पृष्ठेऽस्या यद्दीयत ॥ ४८६ ॥

---

478 d A ०भाषसे A । 479 b A लभ, B लभ । 482 d A C म्रुनी-मम, A C तर्जयन्ती । 483 d D corr. चतुरस्रापि विजृम्भते ।

कस्यां रात्रौ दिने कस्मिन्क प्रदेशे क वा क्षणे ।
आवां मिलिष्याव इति तौ दध्यतुरहर्निशम् ॥४६७॥
वियोगार्त्तौ युवानौ तौ मिथःसङ्गमकाङ्क्षिणौ ।
चक्रवाकाविव चिरमनुरक्तावतिष्ठताम् ॥४६८॥
स युवा तापसीमेकां पुंश्चलीकुलदेवताम् ।
भोजनादिभिराराध्यार्थयाञ्चक्रे परेद्यवि ॥४६९॥
देवदत्तानुपायाश्च मम चान्योन्यरक्तयोः ।
साक्षान्नियतिदेवीव शीघ्रं घटय सङ्गमम् ॥४७०॥
स्वयं दूतीभूय पुरा सा सुभ्रूर्भाषिता मया ।
सङ्गमं मे प्रपन्नास्ति सुकरं तव सम्प्रति ॥४७१॥
प्रतिपद्य करोमीति सद्यः सा तापसी ययौ ।
सदनं देवदत्तस्य भिक्षाद्मेन धीमती ॥४७२॥
स्थालीतलकदानेन व्यापृतां स्वर्णकृद्वधूम् ।
सा परिव्राजिकाद्राक्षीन्मङ्क्षु तामित्युवाच च ॥४७३॥
मन्मुखेन रिरंसुस्त्वां युवैको मूर्तमन्मथः ।
प्रार्थयन्नस्ति विश्वासाच्च मा विलक्षीकृथाः स्म माम् ॥४७४॥
रूपेण वयसा बुद्ध्या वैदग्ध्यान्यगुणैरपि ।
आत्मानुरूपमासाद्य तं कृतार्थय यौवनम् ॥४७५॥
नद्यां स्नान्तीं यदा भद्रे ऽद्राक्षीत्त्वां स तदाद्यपि ।
त्वद्गुणोद्गानवातूलो ऽन्यस्त्रीनामापि वेत्ति न ॥४७६॥

---

473 a B जलक । 474 b MSS मूर्ति । 476 a A तथाद्य for यदा, b A वत्तेभ्यो for वातूलो ।.

गोप्तुं हृदयभावं स्वं दुर्गिलापि हि धीमती ।
तां परिव्राजिकामेवं कद्वदरमतर्जयत् ॥ ४७७ ॥
किं मुण्डे पीतशुण्डासि यदेवमभिभाषसे ।
कुलीनेष्वकुलीनाहं किमनर्हेऽसि कुट्टिनी ॥ ४७८ ॥
आस्त्यजास्मद्गृहोरथं भव लुब्धदर्शना ।
दर्शनेनापि ते पापं भाषणेन तु का कथा ॥ ४७९ ॥
निर्भर्त्सिताया गच्छन्त्यास्तस्याः पृष्ठे तु दुर्गिला ।
सौधभित्ताविव ददौ मषीमलिनहस्तकम् ॥ ४८० ॥
तदाशयमजानाना विलक्षा सा तपस्विनी ।
गत्वा तमूचे दुःशीलपुरुषं परुषाक्षरैः ॥ ४८१ ॥
आस्तामेवं त्वपावादीर्यन्मय्येषानुरागिणी ।
सा स्वभर्तीगवां शुनीमिव ततर्ज माम् ॥ ४८२ ॥
मम दूत्यं मुधा मुग्ध तवाभूत्कुलयोषिति ।
भित्तौ हि चित्ररचना चतुरस्रापि जृम्भते ॥ ४८३ ॥
मषीमलिनहस्तेन गृहकर्मविहस्तया ।
तया कुपितया पृष्ठे चाहतास्मि चपेटया ॥ ४८४ ॥
इत्युक्त्वा दुर्गिलादत्तकज्जलश्यामकाङ्कितम् ।
धूर्तप्रष्ठाय पृष्ठं स्वं दर्शयामास तापसी ॥ ४८५ ॥
स दृष्ट्वा कृष्णपञ्चम्यां सा सङ्केतमदाद् ध्रुवम् ।
पञ्चाङ्गुलिर्मषीहस्तः पृष्ठेऽस्या यददीयत ॥ ४८६ ॥

478 d A ॰भाषसे A । 479 b A कथ, B कथा । 482 d A C शुनी. चित्रा, A C तर्जयन्ती । 483 d B corr. चतुरस्रापि विज्ञायते ।

वैदग्धी काप्यहो तस्या या मे सङ्केतवासरम् ।
आख्याति स्नानया भङ्ग्या समाश्वसिहि हे मनः ॥४८७॥
सङ्केतस्थानमाचख्यौ न सा केनापि हेतुना ।
अहो तत्सङ्गमसुखान्तरायो ऽद्यापि विद्यते ॥४८८॥
पुनस्त्वं तापसीमूचे न जानासि तदाशयम् ।
अनुरक्तैव मयि सा भूयोऽपि प्रार्थयस्व ताम् ॥४८९॥
सर्वथा मा कृथा मातर्निर्वेदं मत्प्रयोजने ।
भूयोऽपि गच्छ निर्वेदः श्रीवल्लेर्मूलमादिमम् ॥४९०॥
साप्यूचे तव नामापि कुलीना सहते न सा ।
स्थले जलारोपणवद्दुष्करं ते समीहितम् ॥४९१॥
त्वदर्थसिद्धौ सन्देहो निःसन्देहं तु भर्त्सनम् ।
अविलम्बेन यास्यामि सुभ्रानाशां तथापि हि ॥४९२॥
इत्युक्त्वा त्वरितं गत्वा तापसी स्वर्णसद्वधूम् ।
भूयो ऽप्युवाच वचनैरमृतद्रवसोदरैः ॥४९३॥
आत्मानुरूपं रूपेण तं युवानं रमस्व हे ।
गृहाण यौवनफलं यौवनस्योचितं ह्यदः ॥४९४॥
दुर्गिला भर्त्सनापूर्वं गले धृत्वा रुषेव ताम् ।
अशोकवनिकाप्रत्यग्द्वारेण निरसारयत् ॥४९५॥
मुण्डापि ह्रीवशाकृष्टनीरङ्गीगोपितानना ।
द्रुतं गत्वा तस्य पुंसः कथयामास खेदभाक् ॥४९६॥

490 c C D मत्वा । 492 d C नाशां i., marg. नासिकां सुभ्रा ।

भर्त्सितास्मि तया प्राग्वद्दौवार्या विधृता ततः ।
पश्चाद्द्वाराशोकवनान्तरान्निस्सारितास्मि च ॥४९७॥
दृष्टो च धीमान्स पुमानशोकवनिकान्तरे ।
आगच्छेरिति सङ्केतो नूनं दत्तस्तया मम ॥४९८॥
ऊचे च मां भगवति न्यक्कारो ऽयं तया कृतः ।
सोढव्यो मे सा हि दुष्टा वाच्या नातः परं त्वया ॥४९९॥
ततश्च स युवा कृष्णपञ्चम्यां रजनीमुखे ।
जगाम पश्चिमद्वारेणाशोकवनिकान्तरे ॥५००॥
सो ऽद्राक्षीद्वर्त्म पश्यन्तीं तां दूरादपि सापि तम् ।
तयोरुल्लसितस्तारामेलको ऽभूद्विवाहवत् ॥५०१॥
प्रसारयन्तौ नयने द्वे बाहू परस्परम् ।
रोमाञ्चोत्फुल्लसर्वाङ्गावुभौ तावभ्यधावताम् ॥५०२॥
तावद्ये ऽप्येकमनसौ तदा त्वेकीभवत्तनू ।
सस्वजाते दृढतरं समुद्रसरिताविव ॥५०३॥
वार्त्ताभिः प्रेमगर्भाभी रतैर्नवनवैरपि ।
सम्भोगह्रदमग्नौ तौ दियामीमतिनिन्यतुः ॥५०४॥
ततो रतायासवतोर्भुजगण्डोपधानयोः ।
सञ्चक्राम तयोर्निद्रा सेवाम्भोजविभावरी ॥५०५॥
इतश्च देवदत्तो ऽपि कार्यचिन्तार्थमुत्थितः ।
जगामाशोकवनिकां तौ शयानौ ददर्श च ॥५०६॥

506 a D ततश्च, d A च: for च ।

अचिन्तयच्च धिगियं स्नुषा पापीयसी मम ।
परपुंसा सह रतश्रान्ता स्वपिति निर्भरम् ॥५०७॥
जार एवायमिति च निश्चेतुं स्थविरः स तु ।
गृहे गत्वा सुतं सुप्तं दृष्ट्वा गत्वेत्यचिन्तयत् ॥५०८॥
आकर्षाम्यहमेतस्याः शनकैः पादनूपुरम् ।
यथा प्रत्येति मे सूनुः कथितामसतीमिमाम् ॥५०९॥
इति दध्युरिवाकृष्य सद्यस्तत्पादनूपुरम् ।
देवदत्तो ऽविशद्देश्म पुनस्तेनैव वर्त्मना ॥५१०॥
नूपुराकर्षणेनाशु प्राबुद्ध स्वर्णकृद्वधूः ।
प्रायः सभयसुप्तानां निद्राप्यल्पा भयादिव ॥५११॥
ज्ञात्वा च सापि श्वशुरेणाकृष्टं पादनूपुरम् ।
उत्थाप्य जारपुरुषं बभाषे भीतिविसंस्थुला ॥५१२॥
प्रयाहि शीघ्रं दृष्टौ स्वः श्वशुरेण दुरात्मना ।
साहाय्याय घटेथास्त्वं ममानर्थे समागते ॥५१३॥
आमेत्युक्त्वार्धसंवीतसंव्यानः स भयाद्ययौ ।
पुंश्चल्यपि द्रुतं गत्वा पार्श्वे पत्युरशेत सा ॥५१४॥
धृष्टत्वं नाटयन्ती सा धीमतीनां धुरन्धरा ।
पतिं प्रबोधयामास गाढालिङ्गनपूर्वकम् ॥५१५॥
उवाच चार्यपुत्रेह घर्मो मामतिबाधते ।
तदेह्यशोकवनिकामनिलालोलपल्लवाम् ॥५१६॥

---

508 b C स्थविरं, = D चिपेत्य, गत्वेन । 511 b A B C प्रायशः ।
512 c C जारं ।

उत्थाय देवदिन्नोऽपि स्त्रीप्रधानः स आर्जवात् ।
जगामाशोकवनिकां तया ग्रीवाविलग्नया ॥५१७॥
तत्रैव गत्वा साशेत पतिमालिङ्ग्य निर्भरम् ।
सजारा यत्र शयिता श्वशुरेण निरीक्षिता ॥५१८॥
तत्रापि तत्पतिर्निद्रां प्रपेदे सरलाशयः ।
निद्रा ह्यक्षुद्रमनसां प्रायेण सुलभैव हि ॥५१९॥
नटीव गोपिताकारा सा धूर्ताथावदत्पतिम् ।
त्वत्कुले कोऽयमाचारो यो वक्तुमपि नेष्यते ॥५२०॥
त्वामालिङ्ग्य प्रसुप्ताया निरावरणवक्षसः ।
जग्राह तातो मे पादादस्मादाकृष्य नूपुरम् ॥५२१॥
न युज्यते वधूः स्प्रष्टुं पूज्यानामन्यदापि हि ।
किं पुनः पतिसहिताः शयिता रतवेश्मनि ॥५२२॥
जगाद देवदिन्नो ऽपि प्रातः पितरमीदृशम् ।
सोपालम्भं भणिष्यामि पश्यन्त्यास्ते मनस्विनि ॥५२३॥
सोचे ऽधुनैव तातं त्वं संवादयितुमर्हसि ।
प्रातर्मामन्यपुंसा हि शयितां कथयिष्यति ॥५२४॥
सो ऽवोचन्मम सुप्तस्याहार्षीन्नूपुरमित्यहम् ।
तातमाक्षिप्य वक्ष्यामि तव पक्षेऽस्मि निश्चितम् ॥५२५॥
प्रभाते ऽपि तथा वाच्यं वक्षीदानीं यथा प्रिय ।
इति तं कारयामास सा धूर्ता शपथान्बहून् ॥५२६॥

---

517 b A स्त्री प्रधानः । 518 a A सेते । 522 a C वधू, D वधूं C M.. सहिता । 524 a A adds हि after धुनैव । 525 b D निश्चये ।

प्रभाते देवदिन्नो ऽपि कुपितः पितरं निजम् ।
जगाद किमकार्षीस्त्वं वध्वा नूपुरकर्षणम् ॥५२७॥
स्थविरो व्याहरद्वत्स दुःशीला हि वधूरियम् ।
दृष्टान्यपुंसा शयिता मयाशोकवने निशि ॥५२८॥
दुःशीलेयमिति दृढप्रत्ययोत्पादनाय ते ।
वध्वाः पादात्समाकृष्य गृहीतं नूपुरं मया ॥५२९॥
पुत्रो ऽवददहं सुप्तस्तदाभून्नापरः पुमान् ।
निर्लज्जेन त्वया तात लज्जितो ऽस्मि किमीदृशम् ॥५३०॥
अर्थितो नूपुरं वध्वा मा तातस्त्वं विगोपय ।
मयि सुप्ते तदाकृष्टं प्रकृष्टा खल्वियं सती ॥५३१॥
स्थविरोऽवोचदाकृष्टं यदास्या नूपुरं मया ।
उपेत्य वीक्षितो ऽसि त्वं तदा हि शयितो गृहे ॥५३२॥
दुर्गिलोवाच न सहे दोषारोपणमात्मनः ।
तातं प्रत्याययिष्यामि कृत्वा दैवीमपि क्रियाम् ॥५३३॥
कुलीनायाः कलङ्को मे वाच्यावमपि नेदृशम् ।
न शोभते मषीबिन्दुरपि धौतसितांशुके ॥५३४॥
इह शोभनयक्षस्य जङ्घान्तर्निस्सराम्यहम् ।
तज्जङ्घयोर्हि मध्येन नाशुद्धो यातुमीश्वरः ॥५३५॥
पिताथ सविकल्पेन निर्विकल्पेन सूनुना ।
प्रतिज्ञा प्रतिपेदे सा तस्या धार्ष्ट्यमहानिधेः ॥५३६॥

---

527 d A वधू । 528 a A °दर्श ।

स्नात्वा धौतांशुकधरा धूपपुष्पोपहारभृत् ।
सा सर्वबन्धुप्रत्यक्षं यक्षं पूजयितुं ययौ ॥५३७॥
तस्या यक्षं पूजयन्त्या जारः सङ्केतितः स तु ।
अलगद्ग्रहिलीभूय कण्ठदेशे कचग्रहवत् ॥५३८॥
अपास्यत गले धृत्वा जनैर्ग्रहिल इत्यसौ ।
पुनः स्नात्वा च सा यक्षमर्चित्वैवं व्यजिज्ञपत् ॥५३९॥
कदापि हि मयास्पर्शि पुमान्नान्यः पतिं विना ।
ग्रहिलो ऽयं तु मत्कण्ठे लग्नः प्रत्यक्षमेव च ॥५४०॥
पत्युर्मत्तद्वयाच्चान्यो लग्नश्चेन्मत्तनौ पुमान् ।
तदा मे शुद्धिदो भूयाः सत्याः सत्यप्रियो ऽसि हि ॥५४१॥
यक्षो ऽपि यावदाविष्टः किं करोमीति चिन्तया ।
तावत्तज्जङ्घयोरन्तःस्खलिते निर्जगाम सा ॥५४२॥
शुद्धा शुद्धेति तत्कालं जने तुमुलकारिणि ।
पुष्पदाम गले तस्या राजाध्यक्षा निचिक्षिपुः ॥५४३॥
वाद्यमानेन तूर्येण हृष्टैर्बन्धुजनैर्वृता ।
लीलया देवदत्तेव सा ययौ श्वशुरौकसि ॥५४४॥
नूपुराकर्षणोद्भूतं कलङ्कमुदतारयत् ।
इति सा तत्प्रभृत्यूचे जनैर्नूपुरपण्डिता ॥५४५॥
वध्वा शुद्ध्या पराभूतो देवदत्तसदाद्यपि ।
चिन्तया नष्टनिद्रो ऽभूद्वारिबद्ध इव द्विपः ॥५४६॥

---

537 a A स्नाता । 546 b C i. marg. वारीबद्ध ।

तं योगिनमिवानिद्रं ज्ञात्वा च पृथिवीपतिः ।
वृत्तिं यथार्थितां दत्त्वा चक्रे शुद्धान्तरक्षकम् ॥५४७॥
एका राज्ञी कचिद्रात्रौ तमन्तःपुररक्षकम् ।
शेते नो वेति विज्ञातुं निरैक्षिष्ट पुनः पुनः ॥५४८॥
सो ऽचिन्तयच्च किमपि कारणं ज्ञायते न हि ।
उत्थाय भूयो भूयो ऽपि मामेषा यन्निरीक्षते ॥५४९॥
सुप्ते च मयि किं कुर्यादिति ज्ञातुं स यामिकः ।
अलीकनिद्रया शिश्ये सा तु भूयो ऽपि निर्ययौ ॥५५०॥
सापि निर्भरसुप्तं तं ज्ञात्वा वृष्टिमुपेयुषी ।
गवाक्षाभिमुखं गन्तुमारेभे चौरवत्क्रमैः ॥५५१॥
गवाक्षस्य हि तस्याधो बद्धो ऽभ्द्राजवल्लभः ।
कुञ्जरो निर्जरगजानुजन्मेव सदामदः ॥५५२॥
सा तस्य हस्तिनो मेण्ठे नित्यरक्ता गवाक्षतः ।
सञ्चारिदारुफलकमपसार्य बहिर्ययौ ॥५५३॥
तामादाय करेणेभो नित्याभ्यासानुशिक्षितः ।
मुमोच भूमौ तां दृष्ट्वाधोरणः स चुकोप च ॥५५४॥
अतिकाले किमायासीरित्युक्त्वा दारुणेक्षणः ।
हस्तिशृङ्खलया राज्ञीं दासीमिव जघान ताम् ॥५५५॥
सोवाच मा ताडय मामद्यान्तःपुररक्षकः ।
राजा युक्तो नवः को ऽपि जागरूको ऽरुणन्स माम्॥५५६॥

---

548 c D शेते । 551 a B गवा° ।

निद्राच्छिद्रं कथमपि प्राप्य तस्य चिरादहम् ।
आगतास्मीति विज्ञाय मा कोपीर्मयि सुन्दर ॥५५७॥
इत्थं च बोधितो हस्तिपकः कोपं विहाय सः ।
रमते स्म निराशङ्कस्तया सह यथारुचि ॥५५८॥
रात्रेस्तु पश्चिमे भागे सा साहसमहानिधिः ।
हस्तिना हस्तमारोप्योदस्थिता स्वाश्रयं ययौ ॥५५९॥
दध्यौ च स्वर्णकारोऽपि चरितं योषितामहो ।
अस्वामी कुक्कुटारावमिव को वेत्तुमीश्वरः ॥५६०॥
अहो असूर्यम्पश्यानामपि यद्राजयोषिताम् ।
शीलभङ्गो भवत्येवमन्यनारीषु का कथा ॥५६१॥
पानीयाहरणाद्यर्थं सामान्यगृहयोषिताम् ।
नगरे सञ्चरन्तीनां शीलत्राणं कियच्चिरम् ॥५६२॥
इति नृपाया दौःशील्यामर्षचिन्तां विहाय सः ।
सुष्वाप दत्तर्णं इवाधमर्णस्तत्र निर्भरम् ॥५६३॥
प्रभातेऽपि जजागार स्थविरः स्वर्णकृन्न सः ।
चेटाश्च कथयामासुस्तं तथास्थं महीभुजे ॥५६४॥
राजापि व्याजहारैवं भाव्यं केनापि हेतुना ।
स यदा प्रतिबुध्येत तदा नेयोऽस्मदन्तिके ॥५६५॥
इत्यादिष्टा ययुश्चेटाः स्वर्णकारोऽपि निर्भरम् ।
निद्रासुखं सप्तरात्रं चिरादनुबभूव सः ॥५६६॥

---

560 c A कुक्कुटा° । 561 d A °नारीष्वा कथा । 563 d A °वर्णस्त° ।
564 c A B चेटास्तु ।

सप्तरात्रावसाने च स प्रबोधमुपागतः ।
चेटैर्निन्ये पुरो राज्ञो राज्ञा चैवमपृच्छ्यत ॥५६७॥
निद्रा कदापि ते नागाद्भंगस्येव कामिनी ।
तत्किं सुप्तः सप्तरात्रं को हेतुर्ब्रूह्यभीस्तव ॥५६८॥
सो ऽपि तं राज्ञिवृत्तान्तं राज्ञ्या हस्तिपकस्य च ।
हस्तिनश्च यथादृष्टं कथयामास भूभुजे ॥५६९॥
राज्ञा प्रसादं दत्त्वा स विसृष्टः स्वगृहं ययौ ।
जीर्णदुःखः सुखं चास्थाद्धैर्यं ह्येति जनो जनात् ॥५७०॥
तां च दुश्चारिणीं राज्ञीं परिज्ञातुमिलापतिः ।
कारयित्वा किलिञ्जेभं राज्ञीः सर्वाः समादिशत् ॥५७१॥
स्वप्नो दृष्टो मया यत्किलिञ्जो ऽयं मतङ्गजः ।
आरोढव्यो विवस्त्राभिर्भवतीभिः पुरो मम ॥५७२॥
चक्रिरे च तथा राज्ञ्यो राज्ञः पश्यत एव ताः ।
राज्ञी सैका त्वदो ऽवादीद्बिभेम्यस्मान्मतङ्गजात् ॥५७३॥
तां लीलोत्पलनालेन सामर्षः प्राहरन्नृपः ।
मूर्छानाटितकं कृत्वा न्यपतत्सापि भूतले ॥५७४॥
नृपो ऽपि बुद्ध्वा निश्चिक्ये सैवेयं कुलपांसिनी ।
पापीयसी दुराचारा कथिता स्थविरेण या ॥५७५॥
निरूपयंश्च तत्पृष्ठं शृङ्खलाघातदर्शनात् ।
नखास्फोटनिकापूर्वं कृत्वा स्मितमदो वदत् ॥५७६॥

570 d A जीर्णदुःखे D जीर्णदुःखं। 571 a A C तां च। 572 a D स्वप्ने, b A B त्वयकं चेत्यं, d D भवतीभिः। 574 a B C नीलोत्प°, D sec. m. 575 a D पापीयसी। 576 c A °स्फ्रा।

क्रीडसीभेन मत्तेन किलिञ्जेभाद्बिभेषि च ।
मोदसे शृङ्खलाघातान्मूर्छस्युत्पलघाततः ॥५७७॥
प्रदीप्तकोपप्राग्भारो गत्वा वैभारपर्वते ।
राजापि तं हस्तिपकं हस्त्यारूढमजूहवत् ॥५७८॥
तद्द्वितीयां च तां राज्ञीमारोपयद्द्विपासने ।
आधोरणाधमं चाथ सामर्षस्तं समादिशत् ॥५७९॥
विषमाद्रिप्रदेशाधिरूढं कृत्वा मतङ्गजम् ।
पातयेः पतता तेन युवयोरस्तु निग्रहः ॥५८०॥
आधोरणस्तं करिणमधिरोप्याद्रिमूर्धनि ।
त्रिपद्या धारयामासोत्क्षिप्तैकचरणं स्थिरम् ॥५८१॥
हाहाकुर्वञ्जनो ऽप्यूचे पयोराज्ञाविधायिनः ।
मारणं करिरत्नस्य राजरत्ने न युज्यते ॥५८२॥
अनाकर्णितकं कृत्वा पातयेत्येव वादिनि ।
भूपे द्विपं हस्तिपकः पद्भ्यां द्वाभ्यामधारयत् ॥५८३॥
हहा न वध्यो हस्तीति पुनर्लोके प्रजल्पति ।
तूष्णीको ऽभून्नृपो मेण्ठो ऽप्येकाङ्घ्रिस्थं गजं दधौ ॥५८४॥
मारणं हस्तिरत्नस्य लोको द्रष्टुमनीश्वरः ।
हाहाकुर्वन्महीनाथं जगादोच्छ्रितैर्भुजैः ॥५८५॥
चेटोपवाह्यो ह्यभवन्नगजाग्र्यः सुशिक्षितः ।
चिन्तारत्नमिव दुःप्रापो दक्षिणावर्तशङ्खवत् ॥५८६॥

---

578 b A हस्त्या । 579 b A ०भावने । 583 a A om द्विपं । 585 a A मरणं, D sec. m. 586 a D चेटपवाह्यो, c D दुष्प्रापो ।

प्रभुस्त्वमपराधीनो यदिच्छसि करोषि तत् ।
निरङ्कुशं स्यादयमस्त्वविवेकभवं तव ॥५८७॥
कार्याकार्यं विचार्यं हि हे स्वामिन्स्वामिना स्वयम् ।
स्वयं विचार्य तद्रक्ष हस्तिरत्नं प्रसीद नः ॥५८८॥
नृपो ऽप्यवोचदस्त्वेवं यूयं सर्वे ऽपि मद्गिरा ।
इमं हस्तिपकं हस्तिरक्षणाय भणन्तु भोः ॥५८९॥
लोकाः प्रोचुः किमियतीं भूमिकां प्रापितं द्विपम् ।
आधोरणधुरीण त्वं निवर्तयितुमीशिषे ॥५९०॥
स उवाच द्विपममुं क्षेमेणोत्तारयाम्यहम् ।
ददात्यदो यद्यभयमावयोर्मेदिनीपतिः ॥५९१॥
राजापि लोकैर्विज्ञप्तः प्रददावभयं तयोः ।
शनैश्च हस्तिनं हस्तिपकस्तमुदतारयत् ॥५९२॥
उत्तीर्णौ वारणस्कन्धाद्राज्ञीहस्तिपकौ तौ ।
पलायिषातां राज्ञोक्तौ मद्देशस्त्यज्यतामिति ॥५९३॥
नश्यन्तौ प्रापतुस्तौ तु ग्राममेकं दिनात्यये ।
एकस्मिंश्च देवकुले शून्ये सुषुपतुर्युतौ ॥५९४॥
अर्धरात्रसमये च ग्रामादेको मलिम्लुचः ।
नंष्ट्वा तदारक्षकेभ्यस्तत्र देवकुले ऽविशत् ॥५९५॥
तत्तु देवकुलं ग्रामारक्षकैः पर्यवेष्ट्यत ।
प्रातश्चौरं ग्रहीष्याम इति निर्णयवादिभिः ॥५९६॥

---

587 a A प्रभुत्व॰ । 590 A c आधोरणा॰ ।

कराभ्यां शोधयन्देवकुलं चौरो ऽपि सो ऽभ्रमत् ।
शनैस्तत्र ययौ यत्र शयानौ तौ बभूवतुः ॥५९७॥
निषादी न जजागार स्पृश्यमानो ऽपि दस्युना ।
श्रान्तसुप्तस्य निद्रा हि सज्यते वज्रलेपवत् ॥५९८॥
अपीयत्तत्करस्पृष्टा राजपत्नी त्वजागरीत् ।
स्पर्शादप्यनुरक्ताभूत्तत्र को ऽसीत्युवाच च ॥५९९॥
शनैरुक्तस्तया सो ऽपि शनैरूचे ऽस्मि तस्करः ।
धावत्स्वारक्षकेष्वत्र प्राणत्राणाय चाविशम् ॥६००॥
सानुरागा च सा चौरमब्रवीदसतीमुदा ।
रक्षामि त्वां न सन्देहो यदि मां सुभगेच्छसि ॥६०१॥
चौरो ऽपि स्माह कनकं मया प्राप्तं सुगन्धि च ।
मम पत्नी भवसि यज्जीवितव्यं च रक्षसि ॥६०२॥
परं पृच्छामि को नाम प्रकारो वरवर्णिनि ।
येन मां रक्षसि ब्रूहि मामाश्वासय धीमति ॥६०३॥
साप्यूचे सुभग ग्रामपुरुषेष्वागतेष्वहम् ।
त्वां भर्तारं भणिष्यामि सो ऽवादीदेवमस्त्विति ॥६०४॥
प्रातश्च ग्रामसुभटैः प्रविष्टैः शस्त्रपाणिभिः ।
पृष्टास्त्रयो ऽपि कश्चौर इति भ्रूभङ्गभीषणैः ॥६०५॥
तान्ग्रामपुरुषान्धूर्ता मूर्तमायेव चावदत् ।
उद्विग्न चौरपुरुषं मम प्रेयानमाविति ॥६०६॥

597 b D शोधयन् । 601 d B सुभ्रु । 606 b A धूर्तमायेव, B मर्तं ।

कृताञ्जलिः पुनस्तोचे भ्रातरो ऽस्मिन्सुरालये ।
आवां ग्रामान्तरे यान्ताववात्स्व दिवसात्यये ॥६०७॥
ग्रामीणास्ते ऽपि सम्भूय पर्यालोच्यैवमूचिरे ।
सम्भाव्यते न चौरस्य गृहे स्त्रीपात्रमीदृशम् ॥६०८॥
ब्राह्मणी वाणिजी राजपुत्री कापीतरास्तु वा ।
इयं पवित्रा मूर्त्यापि चौरो नास्याः पतिर्भवेत् ॥६०९॥
विचित्रवस्त्रालङ्कारा लक्ष्मीरिव वपुष्मती ।
इयं हि गृहिणी यस्य स किं चौर्येण जीवति ॥६१०॥
पारिशेष्यादयं चौर इति हस्तिपकस्य ते ।
दोषमारोप्य विदधुः सद्यः शूलाधिरोपणम् ॥६११॥
शूलाधिरोपितो मार्गे यं यं यान्तं ददर्श सः ।
तं तं प्रोवाच दीनं मां वारि पायय पायय ॥६१२॥
तं ■ राजभयात्को ऽपि न पानीयमपाययत् ।
सर्वो ऽपि कुरुते धर्ममात्मरक्षापुरःसरम् ॥६१३॥
श्रावको जिनदासाख्यस्तेन तेनाध्वना व्रजन् ।
दृष्टस्य याचितस्ताभ्यः सो ऽपि चैवमुवाच तम् ॥६१४॥
उदन्यां ते हरिष्यामि कुरुष्वैकं तु मद्वचः ।
घोषयेर्नमो ऽर्हद्भ्य इति यावद्वार्यानयाम्यहम् ॥६१५॥
सेष्ठो ऽपि तद्घोषयितुं प्रारेभे ऽम्भःपिपासया ।
श्रावको ऽप्यानयन्नीरं राजपुंसामनुज्ञया ॥६१६॥

607 c A याता॰ । 609 ■ A पवित्रा, C पवित्र । 616 b A प्रारेभेन॰ ।

आनीयमानं दृष्ट्वाम्बु समाश्वास्य निषाद्यपि ।
नमो ऽर्हद्भ्य इति श्रद्धं पठन्प्राणैरमुच्यत ॥६१७॥
स त्वसंश्रुतशीलो ऽपि शीलिताकामनिर्जरः ।
नमस्कारप्रभावेण बभूव व्यन्तरामरः ॥६१८॥
सतत्ये पुंश्चली सापि चौरेण सह वर्त्मनि ।
आससाद नदीमेकां वारिपूरेण दुस्तराम् ॥६१९॥
चौरो ऽपि पुंश्चलीमूचे प्रिये त्वामेकवेलया ।
नोत्तारयितुमीशो ऽस्मि वस्त्राभरणधारिणीम् ॥६२०॥
वस्त्राभरणसम्भारं त्वं समार्पय वर्णिनि ।
तमादौ परतो नेष्ये ततस्त्वामपि लीलया ॥६२१॥
यावदायाम्यहं तावच्छरस्तम्बे तिरोभव ।
एकाकिन्यपि मा भैषीरेष्यामि न चिरेण हि ॥६२२॥
आरोप्य पृष्ठदेशे त्वां तरत्पोत इवाम्भसि ।
तटे परस्मिन्नेष्यामि मा भैषीः कुरु मद्वचः ॥६२३॥
पुंश्चल्यपि तथा चक्रे शरस्तम्बे प्रविश्य च ।
वस्त्राभरणभृत्सो ऽपि पारं गत्वेत्यचिन्तयत् ॥६२४॥
भर्तारं मारयामास येयं मय्यनुरागिणी ।
घनरागा हरिद्रेव विपदे स्यान्ममाप्यसौ ॥६२५॥
इत्युपादाय तद्वस्त्राभरणानि स तस्करः ।
तां वलत्कन्धरः पश्यन्नयाति स्म कुरङ्गवत् ॥६२६॥

618 b D शीलना। 621 c A D नेष्ये। 622 d A मेष्यामि। 625 b A B घेयं।

करिणीयोद्धृतकरा यथाजातेव नग्निका ।
ऊचे तं यान्तमालोक्य मां विहाय प्रयासि किम् ॥६२७॥
चोरो ऽब्रवीद्विवसनामेकां शरवणस्थिताम् ।
राक्षसीमिव दृष्ट्वा त्वां बिभेम्येव कृतं त्वया ॥६२८॥
एवं वदन्खग इवोड्डीनः सो ऽगाददर्शनम् ।
तत्रैव तस्थौ त्रासित्वा धर्षणी पतिधर्षिणी ।६२९॥
स हस्तिपकजीवो ऽपि देवभूयमुपेयिवान् ।
प्रयुक्तावधिरद्राक्षीत्तां तथास्थां तपस्विनीम् ॥६३०॥
सम्बोधयितुमेतां तु प्राग्जन्मस्नेहसेधिनीम् ।
मुखात्तमांसपेशीकं शृगालं विचकार सः ॥६३१॥
इतश्च सरितस्तस्यास्तीरे नीराद्बहिःस्थितम् ।
मीनं भोक्तुमधाविष्ट मांसपेशीं विहाय सः ॥६३२॥
तदा मीनः पुनरपि प्रविवेश नदीजलम् ।
उपाददे तद्विक्रान्तशकुन्या मांसपेश्यपि ॥६३३॥
नदीतीरे शरवणनिषण्णा सा तु नग्निका ।
जगाद दुःखदीनापि जम्बुकं दृष्टकौतुका ॥६३४॥
मांसपेशीं परित्यज्य मीनमिच्छसि दुर्मते ।
भ्रष्टो मीनाच्च मांसाच्च किं जम्बुक निरीक्षसे ॥६३५॥
फेरुः स्माहोढभर्तारं हित्वोपपतिमिच्छसि ।
भ्रष्टा पत्युश्च जाराच्च नग्निके किं निरीक्षसे ॥६३६॥

---

628 d C विभेम्येवं । 629 b A सोगाददर्शनं । 630 b D corr. देवीभूयं । 634 d A •कौतुकं ।

तच्छ्रुत्वा सुष्ठु विभ्यत्यास्तस्याः स व्यन्तरामरः ।
महर्द्धिकं निजं रूपं दर्शयित्वैवमब्रवीत् ॥६३७॥
पापमेवाकृथाः पापे यद्यपि त्वं तथापि हि ।
जिनधर्मं प्रपद्येथाः पापपङ्कजलप्लवम् ॥६३८॥
मुग्धे हस्तिपकः सो ऽहं यस्त्वया मृत्युमापितः ।
जिनधर्मप्रभावाच्च देवीभूतो ऽस्मि पश्य माम् ॥६३९॥
जिनधर्मं प्रपत्स्ये ऽहमपीति कृतनिश्चयाम् ।
तां साध्वीसन्निधौ नीत्वा स प्रव्रज्यामजिग्रहत् ॥६४०॥
तदस्मादृग्जनानर्थान्प्रवर्तकनिवर्तकान् ।
दृष्टान्तांस्त्वमनादृत्य भुंक्ष्व वैषयिकं सुखम् ॥६४१॥
जगाद जम्बूनामापि विद्युन्मालीव खेचरः ।
न ह्यस्मि रागग्रहिलश्चरितं तस्य तच्छृणु ॥६४२॥

9. अस्तीह भरतक्षेत्रे वैताढ्यो नाम पर्वतः ।
सम्पृक्तो भरतार्धाभ्यां पक्षाभ्यामिव नीडजः ॥६४३॥
तत्रास्ति पुरवरमुत्तरश्रेणिभूषणम् ।
गगनवल्लभमिति द्युसद्मातिवल्लभम् ॥६४४॥
द्वौ विद्याधरतरुणौ प्रीतिमन्तौ सहोदरौ ।
तत्राभूतां मेघरथो विद्युन्माली च नामतः ॥६४५॥
मन्त्रयामासतुस्तौ च विद्यासाधनहेतवे ।
यामो भूगोचराभ्यर्णे विद्या तत्रैव सेत्स्यति ॥६४६॥

---

641 d D विषयं । 646 a D 1., marg. text. [illegible] च, A तु ।

विद्यासिद्धौ विधिश्चायमतिनीचकुलोद्भवाम् ।
कन्यां परिणयेद्वर्षावधि ब्रह्म च पालयेत् ॥६४७॥
ततो गुरूननुज्ञाप्य भरतार्धे ऽत्र दक्षिणे ।
आजग्मतुर्द्वावपि तौ वसन्तपुरपत्तनम् ॥६४८॥
ततश्चण्डालवेषेण गत्वा चण्डालपाटकम् ।
प्रचक्रमाते चण्डालाराधनं धीमहाधनौ ॥६४९॥
आराधितास्तु मातङ्गाः प्रोचुरायातमद्य किम् ।
आख्यातं चिरकालो ऽभूद्युवयोरिह तिष्ठतोः ॥६५०॥
सद्भावगोपनं कृत्वा कथयामासतुश्च तौ ।
क्षितिप्रतिष्ठान्नगरादागमावेह हे पिताः ॥६५१॥
मातापितृभिरावां हि कुटुम्बस्य बहिष्कृतौ ।
इति रोपेण निर्यान्तौ भ्रमन्तौ चागताविह ॥६५२॥
मातङ्गाः प्रोचिरे चास्मानाश्रित्यातिष्ठतं युवाम् ।
युवाभ्यां तत्प्रयच्छामः स्वे द्वे कन्ये यदोच्छथः ॥६५३॥
किं त्वस्मत्कन्यके पाणिगृहीत्यौ चेत्करिष्यथः ।
अस्मज्जात्युचितं सर्वं तदनुष्ठास्यथो युवाम् ॥६५४॥
तावप्यूचतुरामेति मातङ्गैरपि कन्यके ।
तयोः प्रदत्ते उद्वाहपूर्वकं काणदन्तुरे ॥६५५॥
विद्युन्माली तु मातङ्गकन्यायामतिरागवान् ।
अभूदपि कुरूपायां न विद्यासाधनं व्यधात् ॥६५६॥

---

652 = C रोषेण ।

क्रमेण गृहिणी विद्युन्मालिनो गर्भवत्यभूत् ।
पूर्णे च वत्सरे सिद्धविद्यो मेघरथो ऽभवत् ॥६५७॥
ततो मेघरथः प्रीत्या विद्युन्मालिनमब्रवीत् ।
हे भ्रातः सिद्धविद्याः स्मश्चण्डालकुलमुज्झताम् ॥६५८॥
पात्रीभवावो वैताढ्यविहारसुखसम्पदाम् ।
मातङ्गीं त्यज भाविन्यः खेचर्यो नौ स्वयंवराः ॥६५९॥
विद्युन्माल्यपि तं लज्जावनम्रवदनो ऽवदत् ।
याहि विद्याढ्य वैताढ्यं कृतकृत्यो ऽसि सुव्रत ॥६६०॥
मया लघुसत्त्वेन भग्नो नियमपादपः ।
ततश्च मे तत्प्रभवं विद्यासिद्धिफलं कुतः ॥६६१॥
वराकीं त्यक्तुमर्हामि आत्तगर्भामिमां न हि ।
त्वया सविद्येनाविद्यो गच्छन्जिह्रेमि चानघ ॥६६२॥
याहि साधितविद्यस्त्वं तुभ्यं स्वस्त्यस्त्वहं पुनः ।
असिद्धविद्यो बन्धूनां दर्शयामि कथं मुखम् ॥६६३॥
वञ्चितो ह्यात्मनैवात्मा प्रमत्तेन मयामुना ।
इदानीं साधयिष्यामि विद्यामुद्योगवानहम् ॥६६४॥
वर्षान्ते पुनरागच्छेर्बिभ्राणो भ्रातरं हृदि ।
तदा साधितविद्यो ऽहं यथा यामि त्वया सह ॥६६५॥
चण्डालीप्रेमपाशेन बद्धं तं नेतुमक्षमः ।
एकाक्यपि ययौ मेघरथो वैताढ्यपर्वतम् ॥६६६॥

---

658 a A सिद्धविद्योसि । 659 b A C खेचर्यौ । 660 b A •विनय• ।
666 a A चाण्डाली• ।

आगतो ऽसि किमेकाकी क ते भ्रातेति बन्धुभिः ।
पृष्टः स कथयामास विद्युन्मालिकथां तथा ॥६६७॥
कुरूपा तत्प्रिया सापि म्लेच्छी सुतमजीजनत् ।
विद्यासिद्धिमिव प्राप्य विद्युन्माल्यप्यमोदत ॥६६८॥
म्लेच्छ्यामत्यन्तमासक्त्या पुत्रप्रेम्णा विशेषतः ।
दुःस्वप्नवद्विसस्मार स खेचरसुखं कुधीः ॥६६९॥
सा विद्युन्मालिना सार्धं रममाणा यथासुखम् ।
भूयो ऽप्यधारयद्गर्भं चण्डाली काणदन्तुरा ॥६७०॥
इतश्च विद्यासम्पन्नस्तत्र मेघरथो ऽभ्यगात् ।
वर्षमेकं कथमपि स्वभ्रातृविरहातुरः ॥६७१॥
अहं हि स्वर्वधूकल्पविद्याधरवधूहृतः ।
स काणदन्तुरम्लेच्छीगार्हस्थ्यनरकोपितः ॥६७२॥
प्रासादे सप्तभूमे ऽहं वसाम्युद्यानबन्धुरे ।
श्मशानकीकसाकीर्णे स चण्डालकुटीरके ॥६७३॥
अहं विविधविद्यर्द्धिसिध्यमानसमीहितः ।
जीर्णकर्पटसंव्यानः कदन्नप्राशनश्च सः ॥६७४॥
विद्युन्मालिनि सौभ्रात्रानुरूपमिति चिन्तयन् ।
आगात्पुनर्मेघरथो वसन्तपुरपत्तनम् ॥६७५॥ चतुर्भिः कलापकं॥
ऊचे च भ्रातरं भ्रातर्गत्वा वैताढ्यपर्वते ।
विद्याधरसुखैश्वर्यं वयं किं नानुभूयते ॥६७६॥

---

667 b A च भ्राता इति । 672 c D दंतुरा, d A नरकेर्पित. । 673 c C प्रसादे A °भूमि° c C स्मशाने । 675 a A D चेतसा । 676 d D नानुभूयते ।

विलक्षहसितं कृत्वा विद्युन्माल्यप्यदो ऽवदत् ।
पत्नीयं बालवत्सा मे पुनर्गुर्वी च वर्तते ॥६७७॥
अनन्यशरणां भक्तां सपुत्रां गुर्विणीमिमाम् ।
न ह्यहं वज्रहृदयस्त्वमिवोज्झितुमुत्सहे ॥६७८॥
तद्भ्रातर्गच्छ दद्या मे दर्शनं समयान्तरे ।
अमुं समयमत्रैवातिनेष्यामि स्म मा रुषः ॥६७९॥
तं प्रबोध्य प्रबोध्यातिखिन्नो मेघरथो ऽपि हि ।
पुनर्जगाम कुर्यात्किं हितो ऽप्यतिजडे नरे ॥६८०॥
विद्युन्माल्यपि सञ्जाते द्वितीये तनुजन्मनि ।
अमंस्त मातङ्गकुलं स्वर्गादप्यधिकं मुदा ॥६८१॥
वस्त्रभोज्यादिदौःस्थ्ये ऽपि दुःखं न हि विवेद सः ।
तौ म्लेच्छीकुक्षिजौ बालौ सलीलमुदलालयत् ॥६८२॥
ताभ्यामङ्काधिरूढाभ्यां प्रस्रवद्भ्यां मुहुर्मुहुः ।
गन्धोदकस्नाननिभं मूत्रस्नानममन्यत ॥६८३॥
ततश्च सुभगंमन्या तं म्लेच्छ्यपि पदे पदे ।
चण्डालकुलदासो ऽभूत्तदा सक्तयापि सः ॥६८४॥
भ्रातृस्नेहानुबन्धेनागत्य मेघरथः पुनः ।
विद्युन्मालिनमालिङ्ग्यागदद्गद्गदया गिरा ॥६८५॥
कुलीन चण्डालकुले मा स्थाः काम्या तवेह भोः ।
किं हंसो मानसोत्पन्नो गृहस्रोतसि खेलति ॥६८६॥

---

683 d A प्रश्रवद्भ्यां । 686 b D तदेहि भोः sec. m.

यत्रोत्पन्नोऽसि तन्मा स्म स्वकुलं मलिनीकुरु ।
धूमेनेव गृहं वह्निस्त्वमनेन कुकर्मणा ॥६८७॥
एवं प्रबोध्यमानोऽपि न ह्यागन्तुमियेष सः ।
न भूयोऽप्यहमेष्यामीत्युक्त्वा मेघरथस्त्वगात् ॥६८८॥
अपालयच्चिरं राज्यं पित्र्यं मेघरथोऽप्यथ ।
समये चार्पयत्सूनोर्न्यासे धृतमिवाखिलम् ॥६८९॥
सुस्थितस्यानगारस्य सन्निधाने स धीधनः ।
परिव्रज्यामुपादाय तपस्तप्त्वा च दिव्यभूत् ॥६९०॥
एवं मेघरथः प्राप धीमान्सुखपरम्पराम् ।
विद्युन्माली तु जडधीर्बभ्राम भवसागरे ॥६९१॥
विद्युन्मालीव रागान्धो न भविष्याम्यहं ततः ।
उत्तरोत्तरसौख्यानां पद्मसेनेऽतिलम्पटः ॥६९२॥
ततः कनकसेनोचे ममाग्रमानय मामपि ।
मा शङ्खधमक इव स्वामिन्ननिशयं कृथाः ॥६९३॥
तथा हि शालिग्रामेऽभूत्कश्चिदेकः कृषीवलः ।
नित्यं ररक्ष स क्षेत्रमाविभातं दिनात्ययात् ॥६९४॥
स क्षेत्रसागरे सत्त्वान्दूरादप्युपसर्पतः ।
शङ्खमापूरयन्मञ्चपीतारूढः पलाययत् ॥६९५॥
अन्यदा गोधनं हृत्वा चौरास्तत्क्षेत्रसन्निधौ ।
आगुस्तच्छङ्खनादं च ते श्रुत्वैवमचिन्तयन् ॥६९६॥

689 A पित्रा । 694 b A °रेच ।

अहो ग्रामपुमांसो ऽमी विवासयिषवो धनम् ।
आगुरग्रे ऽपि यदयं नेदीयाञ्छङ्खनिःस्वनः ॥६९७॥
इति ते गोधनं हित्वा पलायिषत दस्यवः ।
दिशो दिशं च प्रययुः प्रातर्वचोत्थपचित्रन् ॥६९८॥
क्षुधितं गोधनं तत्र शनकैः शनकैश्चरत् ।
अरुणोदयवेलायां तत्क्षेत्राभ्यर्णमाययौ ॥६९९॥
गोधनाभिमुखं यावद्धावे स कृषीवलः ।
तावन्निर्मानुषं सर्वं तद्दृष्ट्वैवमचिन्तयत् ॥७००॥
श्रुत्वा मच्छङ्खनिःस्वानं गोधनं तस्करा जहुः ।
तत्राभिशङ्कया नूनं पापाः सर्वत्र शङ्किताः ॥७०१॥
नीत्वा तद्गोधनं ग्रामे ग्रामायादादशङ्कितः ।
वदन्मे देवतादत्तमिदं भो गृह्यतामिति ॥७०२॥
ग्रामो गोमी कृतस्तेन तं साधाद्ग्राममयचवत् ।
भक्तिप्राग्भीचकारोच्चैर्यो हि दत्ते [illegible] देवता ॥७०३॥
तथैव लब्धप्रसरः स द्वितीये ऽपि वत्सरे ।
क्षेत्रे गत्वा प्रतिनिशं प्रारेभे शङ्खवादनम् ॥७०४॥
चौरास्त एव ह्यन्येद्युस्तत्क्षेत्रसाद्वीयसि ।
आययुर्गोधनं हृत्वान्यस्माद्ग्रामान्महानिशि ॥७०५॥
तस्य शङ्खधमस्योच्चैस्ते श्रुत्वा शङ्खनिःस्वनम् ।
सुष्ठु सौष्ठवमालम्ब्य जल्पन्ति स्म परस्परम् ॥७०६॥

---

697 b C विवत्त॰ । 698 a D हत्वा । 700 D om. this verse. 701 c A ॰शंसया । 703 a A गोमान् । 704 a C लब्धावसरः । 705 c D हित्वा । 706 a C शंखधन॰ B शङ्खसम॰ ।

अत्र प्रदेशे क्षेत्रे ऽत्र पुरा शङ्खध्वनिः श्रुतः ।
श्रूयते चाधुनाप्येष ते दरास्ते च मेण्ढकाः ॥७०७॥
सत्त्वेभ्यः क्षेत्ररक्षार्थं को ऽप्येष क्षेत्ररक्षकः ।
नूनं वादयति शङ्खं धिग्वयं वञ्चिताः पुरा ॥७०८॥
घर्षन्त इति ते हस्ताग्रलग्नवर्तिकरा इव ।
पीडयन्तो रदैरोष्ठान्गोस्तनानिव तर्णकाः ॥७०९॥
उत्पाटयन्तो लकुटाञ्शुण्डादण्डानिव द्विपाः ।
आन्दोलयन्तः शस्त्राणि क्षेत्रान्तर्गोरक्षया इव ॥७१०॥
शङ्खशब्दानुसारेण यान्तस्ते चौरकुञ्जराः ।
मञ्चाधिरूढं ददृशुस्तं नरं शङ्खवादकम् ॥७११॥
त्रिभिर्विशेषकम् ॥

आन्दोल्य मञ्चदारूणि ते मञ्चं भुव्यपातयन् ।
पपात सो ऽप्यनाधारं नाधेयमवतिष्ठते ॥७१२॥
कणमूटकवच्चौरा लकुटैस्तमताडयन् ।
भुञ्जान इव सो ऽक्षेप्सीन्मुखे पश्चाप्यथाङ्गुलीः ॥७१३॥
अस्थिनिर्मग्नबन्धं तैर्बद्धा चायोऽस्य तत्करौ ।
बद्धाञ्जलिरिवालक्षि सो ऽथ चौरानतीप्सया ॥७१४॥
धनं गवादि वस्त्रान्तं जगृहुस्तस्य दस्यवः ।
क्षेत्रपालः क्षेत्रपालस्तदा नग्नीकृतो ऽभवत् ॥७१५॥

707 C मेंढकाः corrected in मेदकाः and i marg. [illegible] 709 b C स्थूलवर्तिं, D इति॰ । 709 d D तर्णकः । 712 b A तैर्मञ्चात्, d A नाधेयं । 713 a C मूटक D मूट । 714 a C वर्धि । 15 c B क्षेत्रपालेषक नग्नी॰ ।

हत्वा हत्वा बिल्वपत्रैः कस्यैचिद्वीटिकां ददौ।
आलम्बदोलामध्यास्त कामप्यालिङ्ग्य निर्भरम्॥७२६॥
एवं वानरनारीभिरपशङ्कमरंस्त सः।
अथैतं यूथपतिमविदन्निव दोर्मदात्॥७२७॥
॥ चतुर्भिः कलापकं ॥

कण्डूय्यमानलाङ्गूलः कयापि हि नखाङ्कुरैः।
प्रमृज्यमानसर्वाङ्गरोमराजिः कयापि हि॥७२८॥
कदलीतालवृन्तेन वीज्यमानः कयाचन।
कयापि नलिनीनालैः क्रियमाणावतंसकः॥७२९॥
उच्चैःशृङ्गस्थितो दूरात्स जरन्यूथनायकः।
प्राग्वानरयुवानं तं दृष्ट्वा कोपादधावत॥७३०॥
॥ त्रिभिर्विशेषकं ॥

गोलाङ्गूलयुवानं तं लाङ्गूलं नर्तयंस्तथा।
जघान ग्रावगोलेन स गोलाङ्गूलयूथपः॥७३१॥
लोष्टाहतः सिंह इव कपिसिंहयुवापि सः।
क्रुद्धो घुरघुरारावघोरस्तं प्रत्यधावत॥७३२॥
तौ क्रोधोद्धतसर्वाङ्गौ मिथो भूतावुभावपि।
दुर्हृदावपि सुचिरान्मिलितौ सुहृदाविव॥७३३॥
चटच्चटति दन्ताग्रैश्चटच्चटति पाणिजैः।
व्यापन्नतुर्वपुषि तौ युध्यमानौ परस्परम्॥७३४॥

---

728 c C प्रष्ट॰, A प्रघ॰। 732 c A घुरघु॰। 733 c D corr. दुर्हिमावपि। 734 a b D ॰ष्टिति।

परस्परं दन्तनखघनक्षतजचर्चितौ ।
तदा परिहिताताम्रचोलकाविव रेजतुः ॥७३५॥
क्षणाद्बन्धं क्षणान्मोक्षं प्रयुञ्जाते स्म तावुभौ ।
युध्यमानौ नियुद्धेन क्रीडन्तावाचिकाविव ॥७३६॥
भग्नास्थिर्मुष्टिघातेन कपियूना जरत्कपिः ।
शीघ्रं शीघ्रमपासार्षीन्मन्दं मन्दं न्यढौकत ॥७३७॥
तं वृद्धवानरं चापसर्पन्तं युववानरः ।
जघान लोष्टघातेन तेन चास्फोटि तच्छिरः ॥७३८॥
प्रहारवेदनाक्रान्तः स जरन्यूथनायकः ।
नंष्ट्वा दूरं ययौ दूरापातिमुक्तपतत्रिवत् ॥७३९॥
प्रहारवेदनादीनक्षुपार्श्वेथ परिभ्रमन् ।
एकस्मिन्प्रसरच्छैले शिलाजतु ददर्श सः ॥७४०॥
सोऽम्बुबुद्ध्या न्यधाद्धस्तं शिलाजतुनि वानरः ।
विलग्य तत्तु तत्रैव तस्थौ भूमेरिवोत्थितम् ॥७४१॥
आकर्षामि सुखमिति बाहू तेनाल्पमेधसा ।
शिलाजतुनि निक्षिप्तौ लग्नावेव हि तस्थतुः ॥७४२॥
तेन क्षिप्तौ विलग्नौ च पादावप्यास्यहस्तवत् ।
सोऽथ कीलितपञ्चाङ्ग इव मृत्युमवाप च ॥७४३॥
स वानरः पाणिपादाबद्धः कर्षन्मुखं यदि ।
तदा मुच्येत शैलेयसलिलान्नात्र संशयः ॥७४४॥

---

735 d D चैलकाविव ।

दिव्यनेपथ्यसम्भारं स्वप्ने ऽपि न ददर्श या ।
क्षणे क्षणे पर्यधात्तं सा राज्ञीव नवं नवम् ॥१०॥
यस्याश्च काञ्चिकश्राद्धाप्यपूर्यत कदापि न ।
कुण्डोध्न्यो धेनवस्तस्या गृहे ऽभुवन्सहस्रशः ॥११॥
आजन्मापि हि या तस्थौ जीर्णे तार्णे कुटीरके ।
सौधे प्राकारपर्यन्तेदीप्तमत्तवारणबन्धुरम् ॥१२॥
जिजीव या परगृहगोमयत्यागकर्मणा ।
पादाब्जे इव तां दास्यः सम्मलग्नाः सिषेविरे ॥१३॥
स्वपापचिन्तया दीना सर्वदापि बभूव या ।
सा दीनोद्धारमारेभे सम्पदा यदृच्छया ॥१४॥
तां बुद्धिसम्पदं दृष्ट्वा सिद्धिः सञ्जातमत्सरा ।
अचिन्तयत्कुतो ऽमुष्याः सम्पदा सम्पदीदृशी ॥१५॥
भवत्वस्याः सखीत्वेन सदा विश्वासभाजनम् ।
प्रक्ष्यामि तदिमामेव कृत्वा चाटुशतान्यपि ॥१६॥
इति बुद्धिमती सिद्धिः प्रययौ बुद्धिसंनिधौ ।
बुद्ध्या प्रियसखीत्युच्चैः सत्कृतैवमुवाच सा ॥१७॥
विभवस्ते भगिन्येष कुत आगादचिन्तितः ।
चिन्तामणिरिव प्राप्तो वैभवेनानुमीयते ॥१८॥
किं ते राजप्रसादो ऽभूत्तुष्टा वा कापि देवता ।
लब्धं किञ्चिन्निधानं वा रसो वा साधितस्त्वया ॥१९॥

12 b D सौधे। 16 d A °शतामपि। 18 d A चिन्मरे°।

सम्पद्वत्या त्वयाभूवमहं सम्पद्वती सखि ।
अद्य दारिद्र्यदुःखाय मया दत्तो जलाञ्जलिः ॥२०॥
अहं त्वं त्वमहं प्रीत्या भेदो देहे ऽपि नावयोः ।
आवयोर्न मिथो ऽकथ्यं कथयर्द्धिरियं कुतः ॥२१॥
अबुध्यमाना तद्वात्तं बुद्धिराख्यद्यथातथम् ।
यथा ह्याराधितो यक्षो यथा च स ददौ श्रियम् ॥२२॥
सिद्धिर्दध्यौ च तच्छ्रुत्वा साधु साधु ममापि हि ।
विभवोपार्जनोपायो निरपायो भविष्यति ॥२३॥
सविशेषममुष्या हि यक्षमाराधयाम्यहम् ।
सविशेषा यथा सम्पदपि सम्पद्यते मम ॥२४॥
अथार्थसिद्धये सिद्धिर्बुद्धिदर्शितया दिशा ।
आराधयितुमारेभे यक्षमेवमहर्निशम् ॥२५॥
खटिकाधातुभिर्देवकुलसोपानमालिकाम् ।
यक्षस्य मण्डयामास भक्त्या विविधभक्तिभिः ॥२६॥
नित्यं स्वस्तिकरेखाभिर्यक्षाङ्गणमभूषयत् ।
भक्तिप्रकारान्कर्तव्यान्गणयन्तीव तन्निभात् ॥२७॥
स्वयं पानीयमानीय स्नपयामास सा स्वयम् ।
यक्षं कक्षीकृतोपास्तिनियमा प्रतिवासरम् ॥२८॥
बिल्वपत्रकरवीरतुलसीकुब्जकादिभिः ।
सा यक्षं पूजयामास त्रिसन्ध्यं स्वयमाहृतैः ॥२९॥

---

28 c C ॰पास्ति॰ ।

एवं च जिह्वेन्द्रियमात्रलुब्धो
नारीषु शैलेयनिभासु मुग्धः ।
मज्जन्हृषीकैरपि पञ्चभिस्तैर्
देही विनश्येत तथाश्मवत्तु ॥७४५॥

इत्याचार्यश्रीहेमचन्द्रविरचिते परिशिष्टपर्वणि स्थविरावलीचरिते
महाकाव्ये जम्बूस्वामिविवाहप्रभवचौरागममधुबिन्दुपुरुषकथाकुबेरद-
त्तकथामहेश्वरदत्तकथाकर्षककथाकाककथावानरवानरीकथाश्वाङ्गारका-
रककथानूपुरपण्डिताशृगालकथाविद्युन्मालिकथाशङ्खधमककथाशिलाज
तुवानरकथावर्णनो नाम द्वितीयः सर्गः समाप्तः ॥

---

## CANTO III.

अथोवाच नभःसेना रचिताञ्जलिरार्षभिम् ।
मा स्म भूः स्थविरेव त्वं स्थविरायाः कथा यथा ॥१॥
12. अभूतां ग्राम एकस्मिन्बुद्धिः सिद्धिश्च नामतः ।
स्थविरे द्वे मिथःसख्यौ नित्यमत्यन्तदुःखिते ॥२॥
तस्य ग्रामस्य च बहिः साधिष्ठानो ऽस्ति सर्वदा ।
प्रसिद्धो भोलको नाम यक्षः काङ्क्षितवित्तदः ॥३॥
स्थविरा बुद्धिनाम्नी च दारिद्र्यद्रुमवाटिका ।
सम्यगाराधयामास तं यक्षं प्रतिवासरम् ॥४॥
त्रिसन्ध्यमपि तद्देवकुलं मार्जयति स्म सा ।
पूजापूर्वं च नैवेद्यं तस्मै नित्यमढौकयत् ॥५॥
ददामि किं तुभ्यमिति यक्षस्तुष्टो ऽन्यदावदत् ।
आराध्यमानो नितरां कपोतो ऽपि हि तुष्यति ॥६॥
जगाद साथ स्थविरा यदि तुष्टो ऽसि देव मे ।
तद्देहि येन जीवामि सुखसन्तोषभागहम् ॥७॥
यक्षः प्रोवाच हे बुद्धिस्थविरे सुस्थिता भव ।
मत्पादमूले दीनारं लप्स्यसे त्वं दिने दिने ॥८॥
दिने दिने च दीनारं लभमाना तदादि सा ।
स्वजनाज्जनपदाच्चाधिकर्द्धिः स्थविराभवत् ॥९॥

---

9 b D तदादि ।

एकभक्तोपवासादितत्परा यक्षवेश्मनि ।
सेवामाहर्निशं यक्षाभियोग्यव्यन्तरीव सा ॥३०॥
एवमाराधितो ऽत्यन्तं स यक्षः सिद्धिमभ्यधात् ।
तुष्टो ऽस्मि ते महाभागे प्रार्थयस्व यदिच्छसि ॥३१॥
सा च विज्ञपयामास यक्षमक्षीणसम्पदम् ।
मत्सख्या यत्त्वया दत्तं देहि तद्द्विगुणं मम ॥३२॥
एवं भविष्यतीत्युक्त्वा भोलयक्षस्तिरोदधे ।
सिद्धिरप्यभवद्बुद्धेरधिकर्द्धिः क्रमेण तु ॥३३॥
बुद्धिर्दृष्ट्वाधिकर्द्धिं तां यक्षमाराधयत्पुनः ।
यक्षो ऽपि प्रत्यहं तस्यै ददौ तद्द्विगुणं धनम् ॥३४॥
सिद्धिराराधयद्यक्षं तस्याश्च स्पर्धया पुनः ।
यक्षे तुष्टे ऽतिदुष्टात्मा चिन्तयामास चेतसि ॥३५॥
यत्किञ्चित्प्रार्थयिष्ये ऽहं द्रव्यं यक्षात्प्रसेदुषः ।
यक्षमाराध्य तद्बुद्धिर्द्विगुणं प्रार्थयिष्यते ॥३६॥
तस्मात्किमपि तद्याचे यत्तु द्विगुणमर्पितम् ।
अपकाराय जायेत बुद्धेर्बुद्धिमता हि मे ॥३७॥
इत्ययाचत सा यक्षमक्ष्येकं मम काणय ।
एवमस्त्विति यक्षोक्ते सद्यः काणा बभूव च ॥३८॥
यक्षो ऽधिकं किमप्यस्या भूयो ऽपि प्रददाविति ।
तमेवाराधयामास बुद्धिस्तद्द्विगुणार्थिनी ॥३९॥
प्रसन्नात्प्रार्थयामास यक्षाद्बुद्धिरपीदृशम् ।
सिद्धेर्यद्भवता दत्तं देहि तद्द्विगुणं मम ॥४०॥

एवमस्त्विति सुरो ऽपि प्रणिगद्य तिरोदधे ।
सापि तत्कालमभ्याभून्न मुधा दैवतं वचः ॥४१॥
एवं हि बुद्धिस्थविरा पूर्वाप्तयापि सम्पदा ।
अदृष्टातिलोभपरा स्वं स्वेनैव व्यनाशयत् ॥४२॥
मानुषश्रियमासाद्य त्वमपीच्छन्नतिश्रियम् ।
तस्या अन्धस्थविरायाः प्रतिरूपो भविष्यसि ॥४३॥
जम्बूनामाप्यभिदधे नाहमुत्पथगाम्यहो ।
जात्याश्व इव देवानां प्रिये तस्य कथां शृणु ॥४४॥

13. जितशत्रुः प्रतापेन वसन्तपुरपत्तने ।
जितशत्रुरभूद्राजा राजमानो ऽद्भुतश्रिया ॥४५॥
तस्य चोर्वीपतेः श्रेष्ठी श्रेष्ठो धीधनशालिनाम् ।
जिनदास इति ख्यातो ऽभवद्विश्वासभाजनम् ॥४६॥
अन्यदा लक्षणधरानेवमश्वस्यात्मजानिव ।
राज्ञः प्रादर्शयन्नश्वकिशोरानश्वपालकाः ॥४७॥
तदाश्वलक्षणविदामादिदेश विशाम्पतिः ।
के के ऽत्र लक्षणैः कैः कैः सम्पूर्णा इति शंसत ॥४८॥
एकमश्वकिशोरं ते शास्त्रोक्तैरश्वलक्षणैः ।
लक्षितं क्षितिनाथाय कथयामासुरित्यथ ॥४९॥
असौ वृत्तखुरः स्निग्धसन्धिर्जङ्घाखुरान्तरे ।
निमांसजानुजङ्घास्थः कुञ्चितोन्नतकन्धरः ॥५०॥

---

43 c A मत्वाद्। 48 d C शंसतः A शंसते। 49 b A स्वर्शित
50 c D जंघास्य।

पङ्कजामोदिनिःश्वासः स्निग्धरोमा विकस्वरः ।
मल्लिकाक्षो लघुस्तब्धश्रवणो लम्बकेसरः ॥५१॥
पञ्चभद्रो गूढवंशः पृथुः स्कन्धादिषट्के ।
उरस्यादिषुवावर्तदशकेनोपशोभितः ॥५२॥
शुभावर्तादिभिर्दुष्टैरावर्तैः परिवर्जितः ।
स्निग्धदन्तः किशोरो ऽयं पुष्णाति स्वामिनः श्रियम् ॥५३॥
॥ चतुर्भिः कलापकं ॥
राजापि हि स्वयं विज्ञो विज्ञायाश्वं तथैव तम् ।
स्नपयामास सर्वाङ्गं पुष्णाविलवारिणा ॥५४॥
पुष्पपूजां वस्त्रपूजां कृत्वा तस्याथ वाजिनः ।
नृपतिः कारयामास लवणोत्तारणादिकाम् ॥५५॥
अचिन्तयच्च को ऽत्रैनं तुरङ्गं रक्षितुं क्षमः ।
प्रायेणापायसङ्कुलान्येव रत्नानि भूतले ॥५६॥
यद्वा ममानुरक्तो ऽस्ति सदा विश्रम्भभाजनम् ।
श्रावको जिनदासाख्यः प्रख्यातः श्रावकव्रतः ॥५७॥
बुद्धिमान्स्वामिभक्तश्च प्रमादपरिवर्जितः ।
स एवेदृशरत्नस्य न्यासपात्रत्वमर्हति ॥५८॥
जिनदासमथाहूय ससमानं समादिशत् ।
रक्षणीयो ममात्मेवाश्वकिशोरस्त्वया ह्ययम् ॥५९॥
प्रमाणमादेश इति जिनदासो ऽभिधाय च ।
निन्ये तमश्वं स्वगृहे पदातिपरिवारितम् ॥६०॥

52 b C स्कन्धादि° । 52 c D उरस्थादिषु । 53 d C स्वामिना । 54 a C श्रेष्ठो for विज्ञो । 54 d C पुष्पा ।

स्थानमश्वकिशोरस्य स्निग्धकोमलवालुकम् ।
सुपदं कारयामास सगङ्गापुलिनोपमम् ॥६१॥
पच्चलान्यरजस्कानि स्वादूनि हरितानि च ।
तृणानि चारयामास तमश्वं स्वयमेव सः ॥६२॥
भूप्रदेशे सिकतिले लोष्टकण्टकवर्जिते ।
सुखरश्मौ स्वयं धृत्वा वेल्लयामास तं हयम् ॥६३॥
सुगन्धिभिश्च स्नानीयैः पानीयैरेकतप्तकैः ।
तं स्वयं स्नपयामास स्वयं सन्ध्यौ यदा तदा ॥६४॥
नीरुङ् न वेत्यनुदिनं तमश्वं स परीक्षितुम् ।
स्वयं पर्यस्य पर्यस्यापश्यत्तन्नेत्रपक्ष्मणी ॥६५॥
स्वयमारुह्य गमयन्सुखं मयमधारया ।
स्निग्धे पयः पाययितुं तं सरक्षमनुवासरम् ॥६६॥
सरोरुहान्तरे चाभूज्जिनायतनमुच्चकैः ।
संसाराब्धेरन्तरीपमिवाक्रान्तं मतेन यत् ॥६७॥
मा भूदर्हदवज्ञेत्यश्वारूढो ऽपि तत्सुधीः ।
त्रिः प्रदक्षिणयामास यानायानमपि सो ऽन्वहम् ॥६८॥
अश्वारूढो ऽप्यवन्दिष्ट स देवं देवतत्त्ववित् ।
प्रमादो मा स्म भूदस्येत्युत्तीर्य प्राविशच्च ॥६९॥
एवं च जिनदासस्तं तथा हयमशिक्षयत् ।
यथा सरोरुहं चैत्यं विना नान्यत्र सो ऽगमत् ॥७०॥

61 c A B C सुषदं। 62 a A पच्चलीन। 63 ab A भूप्रदेशे सिकत: तिलेलोष्टकवर्जित। 64 d A B यदा यदा, B corr. यदामदा। 69 d C °त्तोर्य। 70 c D तथा।

यथा यथा स ववृधे ऽश्वकिशोरः शनैः शनैः ।
तथा तथा ववृधिरे सम्पदो नृपवेश्मनि ॥७१॥
तस्य चाश्वकिशोरस्य प्रभावेण स भूप्रभुः ।
उत्कृष्टो ऽभूदशेषाणां राज्ञामाज्ञायतक्रतुः ॥७२॥
ते त्वाज्ञाकरणोद्विग्ना दध्युरेवं महीभुजः ।
हार्यो मार्यो ऽथवाश्वो ऽयं यत्प्रभावाद्वयं जिताः ॥७३॥
तस्याश्वस्य तथा कर्तुमशक्तेषु तु राजसु ।
एकस्य मन्त्री सामन्तस्योचे धीगर्वपर्वतः ॥७४॥
अहं केनाप्युपायेन तं हरिष्यामि वाजिनम् ।
दुष्करं किमुपायस्योपायज्ञैर्हि नो मितिः ॥७५॥
एवं कुर्विति सामन्तेनाप्यादिष्टः स धीनिधिः ।
मायया श्रावकीभूयागाद्वसन्तपुरे पुरे ॥७६॥
तत्र चैत्यानि वन्दित्वा मुनीन्सुविहितानपि ।
जिनदासगृहे गत्वा गृहचैत्यमवन्दत ॥७७॥
श्रावकवन्दनेनाथ जिनदासमवन्दत ।
मयूरव्यंसकत्वेन श्रावकत्वं स दर्शयन् ॥७८॥
अभ्युत्थायाथ वन्दित्वा तं साधर्मिकवत्सलः ।
जिनदासः पर्यपृच्छत्कुतो ऽभ्यागामहाशयः ॥७९॥
कपटश्रावको ऽप्यूचे संसारे ऽहं विरक्तिभाक् ।
न चिरात्प्रव्रजिष्यामि गार्हस्थ्येन कृतं मम ॥८०॥

---

71 d A °वेश्मनः। 72 d A यतकर्तुः। 74 d D °चोचे। 75 d C corr मतिः, D मितिः।

तीर्थयात्रां तु निर्माय निर्मायो धर्मबान्धवः ।
आदास्थे सुगुरोः पार्श्वे प्रभवत्पुंव्रतं व्रतम् ॥८१॥
जगाद जिनदासो ऽपि महात्मन्स्वागतं तव ।
समानशीलयोः सन्तु धर्मगोष्ठीसुखानि नौ ॥८२॥
तथेति प्रतिपेदानं दानशौण्डः स धर्मिषु ।
तं प्रीत्यास्नपयन्मायाश्रावकं निजबन्धुवत् ॥८३॥
अपि स्नानप्रयत्नेन निर्मलीकृतकुन्तलान् ।
कस्तूरीपङ्कमलिनांस्तस्य मूर्ध्न्यकारयत् ॥८४॥
सामन्तमन्त्रिणस्तस्यालेख्यालिखितसन्निभम् ।
सुमनोदामगर्भं च धम्मिल्लं मूर्ध्न्यबन्धयत् ॥८५॥
तदङ्गमङ्गरागेण ज्योत्स्नासब्रह्मचारिणा ।
अचर्चयत्सुरभिणा चान्दनेन तनीयसा ॥८६॥
निर्दग्धागुरुकर्पूरकस्तूरीवासितान्यथ ।
वस्त्राणि धर्मबन्धुं तं धर्मधीः पर्यधापयत् ॥८७॥
लेह्यभक्ष्यपेयास्वाद्यद्यां रसवतीमथ ।
जिनदासस्तन्निमित्तं सद्येन निरपीपदत् ॥८८॥
आसितो जिनदासेन स्वर्गरोमासने ऽथ सः ।
अभोजि विविधैर्भोज्यैर्विलुलद्व्यञ्जनानिलम् ॥८९॥
भोजनानन्तरं छद्मश्रावकेण दुरात्मना ।
महात्मा जिनदासो ऽथ प्रारेभे धर्मसङ्कथाम् ॥९०॥

---

87 a D मद। 88 a A लेह्यभोज्य॰। 89 d D व्यंजना। 90 d C जिनसंकथां।

स्वजनो जिनदासस्य तदैको ऽभ्येत्य चावदत् ।
कल्ये कल्याणकार्येणोपेहि बन्धो मदोकसि ॥९१॥
अहोरात्रं च सकलं स्थातव्यं तत्र हि त्वया ।
कल्याणकुशलो ऽसि त्वं कल्याणं किं त्वया विना ॥९२॥
आमेत्युदित्वा स्वजनं जिनदासो विसृज्य तम् ।
तं मायाश्रावकमृजुर्व्याजहारातिहारगीः ॥९३॥
अवश्यमेव गन्तव्यं मया स्वजनवेश्मनि ।
मद्गृहं त्वद्गृहमिदं त्वया रक्ष्यं गते मयि ॥९४॥
आमेति प्रतिपेदे च स कूटश्रावको वचः ।
जगाम जिनदासस्तु विश्वस्तस्तत्र दुर्मतौ ॥९५॥
तस्मिंश्च दिवसे कौमुद्युत्सवो ऽभून्महापुरे ।
हल्लीसपूर्वकं पौरवधूरासकलासकः ॥९६॥
रजन्यां च जनपदे कौमुदीमददुर्मदे ।
स मायाश्रावको ऽश्वं तमादायाश्वमश्वयीत् ॥९७॥
अश्वो ऽपि यो ऽर्हच्चैत्यस्य विधाय त्रिः प्रदक्षिणाम् ।
जगाम वार्यमाणो ऽपि तस्मिन्सरसि नान्यतः ॥९८॥
व्यावृत्तः सरसस्त्वागात्तद्देवायतनं पुनः ।
ततो ऽपि न ययौ गेहे सो ऽश्वो नान्यत्र कुत्रचित् ॥९९॥
स दुःसामन्तसचिवो ऽन्यथाश्वं नेतुमीश्वरः ।
न यावदभवत्तावद्विभाति स्म विभावरी ॥१००॥

93 d A ०चारिणी D sec. m. 95 d D दुर्मतै। 99 b D corr. गदेषा०।

पलायिष्ट स दुष्टात्माभ्युदितश्च दिवाकरः ।
तदा च जिनदासो ऽपि न्यवर्तत गृहं प्रति ॥१०१॥
आगच्छञ्जिनदासश्चाश्रौषीज्जनमुखादिदम् ।
वाहितः सकलां रात्रिं तवाश्वः कौमुदीमहे ॥१०२॥
किमेतदिति सम्भ्रान्तो जिनदासो ऽप्यगाद्गृहम् ।
ददर्श चाश्वं तं श्रान्तं क्षामं स्वेदमलीमसम् ।।१०३॥
दिष्ट्याश्वो ऽस्त्येष हा धर्मच्छलेन छलितो ऽस्म्यहम् ।
इति हर्षविषादाभ्यां सद्यः स परिषस्वजे ॥१०४॥
एवं जिनदासो ऽश्वं सविशेषं तदादि तम् ।
उत्पथं न जगामेति स हि प्रियतरो ऽभवत् ॥१०५॥
तमश्वमिव मां के ऽपि नोत्पथं नेतुमीश्वरः ।
तत्पन्थानं न हास्यामि परलोकसुखावहम् ॥१०६॥
कनकश्रीरथोचाच सहासं प्रेमबन्धुरम् ।
ग्रामकूटसुत इव मा त्वं स्वामि जडो भव ॥१०७॥
14. तथा हि ग्राम एकस्मिन् ग्रामकूटसुतो ऽभवत् ।
एको विपन्नपितृको ऽत्यन्तदुःखितमातृकः ॥१०८॥
तमूचे रुदती माता त्वं हि कापुरुषाग्रणीः ।
विना परकथां नान्यत्कर्म ते प्रतिवासरम् ॥१०९॥
अजीवद्व्यवसायेन पिता ते व्यवसायवान् ।
आरब्धं च व्यवसायं सर्वदा निरवाहयत् ॥११०॥

---

104 b A छलितोऽस्मि च । 108 b C °दुर्वोमघन् । 110 d D व्यवसायि-वम् ।

त्वं भ्रातु नोपक्रमसे व्यवसायं युवापि हि ।
आरब्धव्यवसायस्य निर्वाहे तु कथैव का ॥१११॥
समानवयसस्ते हि जीवन्ति स्वेन कर्मणा ।
पद्मषण्ड इव भ्राम्यन्निष्कर्मा त्वं न लज्जसे ॥११२॥
दारिद्र्येण मदीयेन बिभर्ष्युदरमप्यदः ।
उदरे [redacted] भृते कोशो भृत इत्येव मन्यसे ॥११३॥
पुत्रः प्रोवाच हे मातर्मातः परमनर्गलः ।
भविष्यामि करिष्यामि खल्वर्थोपार्जनोद्यमम् ॥११४॥
व्यवसायमुपक्रान्तमर्थोपार्जनहेतवे ।
निर्वाहयिष्ये हे मातरनिर्विण्णः पिता यथा ॥११५॥
तस्यान्यदा ग्रामपर्षद्युपविष्टस्य पश्यतः ।
मनस्यङ्गामस्खरस्तोदयिलाङ्घ्रिबन्धनम् ॥११६॥
खरस्तु मसयन्तं तमन्वधावत्स भामहः ।
धारयितुमसमर्थस्तोर्ध्वबाहुरदो ऽवदत् ॥११७॥
भो भो ग्रामसभासीना: सर्वे ऽपि ग्रामदारकाः ।
यः को ऽपि शक्तो वो मध्ये स मे धरतु रासभम् ॥११८॥
ग्रामकूटसुतो ऽर्थस्य लाभं तस्मादिचिन्तयन् ।
धावित्वा तं खरं पुच्छे वृन्ते फलमिवाग्रहीत् ॥११९॥
लोकैः स वार्यमाणो ऽपि यावत्तं नामुचत्खरम् ।
तावत्तच्चरणाघातभग्नदन्तो ऽपतद्भुवि ॥१२०॥

---

112 c B पद्मखण्ड, A₁ पद्मखण्ड । 113 a A दारिद्र्य ।

तस्मान्नाथ त्वमप्येवमसद्ग्रहमनुत्सृजन् ।
न ज्ञायते किमपि यत्फलमासादयिष्यसि ॥१२१॥
जगाद जम्बूनामाथ स्मितविच्छुरिताधरः ।
स्वकीयकार्यग्रहिलः वोल्लक इव नास्म्यहम् ॥१२२॥
15. तथा हि भुक्तिपालस्यैकस्याभूद्घोटिकोत्तमा ।
स्वयं स पुत्रीमिव तामलालयदपालयत् ॥१२३॥
प्रत्यजागरयत्तां च घृततैलोदनादिभिः ।
पुमांसं वोल्लकं नाम समादिश्यान्वहमिदम् ॥१२४॥
स्वादु स्वादु यदश्वायै भोज्यं स्वाप्नोति वोल्लकः ।
किञ्चिदेव ददौ तस्यै शेषं तु बुभुजे स्वयम् ॥१२५॥
वोल्लको ऽप्यर्जयामास चिरं वञ्चनया तया ।
वडवाजीवविषयं कर्मान्तराभियोगिकम् ॥१२६॥
प्रपद्य कालधर्मं स तेन वञ्चनकर्मणा ।
मूढः पान्थ इवारण्ये ऽभ्राम्यत्तिर्यग्गतौ चिरम् ॥१२७॥
क्षितिप्रतिष्ठे नगरे सोमदत्तद्विजन्मनः ।
सूनुः वोल्लकजीवो ऽभूत्सोमश्रीकुक्षिजो ऽन्यदा ॥१२८॥
मृत्वार्वती भवं भ्रान्त्वा तस्मिन्नेव पुरोत्तमे ।
पुत्री कामपताकाया गणिकाया अजायत ॥१२९॥
मातरपितराभ्यां च पोष्यमाणः स माणवः ।
क्रमेण यौवनं प्रापाप्रमत्तः कणभिक्षया ॥१३०॥
धार्यमाणा हृदयाग्रे धात्रीभिर्हरियष्टिवत् ।
गणिकादुहिता सापि क्रमेण प्राप यौवनम् ॥१३१॥

वपुःपावनयोस्तस्या रूपयौवनयोरभूत् ।
भूष्यभूषणतात्यन्तं तुल्यैव हि परस्परम् ॥१३२॥
मिथश्च ग्रामतरुणाः स्पर्धमाना महर्द्धयः ।
आसज्यन्त भृशं तस्यां मालत्यामिव षट्पदाः ॥१३३॥
तस्यामत्यन्तमासक्तः सो ऽपि ब्राह्मणदारकः ।
सिषेवे श्वेव तद्द्वारं कामः सर्वङ्कषः खलु ॥१३४॥
राजामात्यश्रेष्ठिपुत्रादिभिः सह महर्द्धिभिः ।
क्रीडन्तीं तमवज्ञासीत्तां दृष्ट्वैव जिजीव सः ॥१३५॥
सा तु सम्भावयामास दरिद्रं न दृशापि तम् ।
गणिकानां स्वभावो ऽयं रागो धनिनि साधने ॥१३६॥
स ब्राह्मणकुमारो ऽपि मारमार्गणदारितः ।
तत्कर्मैकरतां भेजे तत्पार्श्वे दातुमक्षमः ॥१३७॥
स चक्रे कृषिकर्माणि सारथ्यं वार्युदञ्चनम् ।
कण्डपेषणमन्यच्च तस्याकृत्यमभून्न हि ॥१३८॥
स च निःसार्यमाणो ऽपि निरयासीन्न तद्गृहात् ।
तस्याः कुमुचां न्यक्कारं संसेहे ताडनाद्यपि ॥१३९॥
तद्युष्मास्ववर्तीप्रायास्तदिदं कर्माभियोगिकम् ।
मार्जयिष्यामि स इव शतं वो युक्तिकल्पनैः ॥१४०॥
ततः कमलवत्यूचे हे नाथ कमलानन ।
मासादहंसशकुनिवन्मा त्वं साहसिको भव ॥१४१॥
16. तथा ह्येकः पुमान्देशान्तरे दुर्भिक्षपीडितः ।
चचाल स्वजनं हित्वा सार्थेन महता सह ॥१४२॥

एकस्यां च महाटव्यां सार्थे आवासिते सति ।
आहर्तुं तृणकाष्ठादि स एको ऽपि विनिर्ययौ ॥१४३॥
तदा च सुप्तव्याघ्रास्यात्पक्ष्येको वनगह्वरे ।
दन्तलग्नामिषखण्डान्यादायारोहदंह्रिपम् ॥१४४॥
मा साहसमिति ब्रुवन् स भक्षन्मांसखादकः ।
शकुनिस्तेन जगदे पुरुषेण सविस्मयम् ॥१४५॥
रौषि मा साहसमिति व्याघ्रास्यान्मांसमत्सि च ।
मुग्धस्त्वं दृश्यसे वाचो ऽनुरूपं कुरुषे न च ॥१४६॥
हित्वा साधाद्भवसुखं तददृष्टसुखेच्छया ।
तपश्चिकीर्षुस्त्वमपि मासाहसखगोपमः ॥१४७॥
जम्बूरभिदधे स्मित्वा न मुह्यामि भवद्गिरा ।
न हि भ्रश्याम्यहं स्वार्थाज्जानानस्त्रिसुहृत्कथाम् ॥१४८॥

17. क्षितिप्रतिष्ठे नगरे जितशत्रोर्महीपतेः ।
पुरोधाः सोमदत्तो ऽभूत्सर्वत्राप्यधिकारकृत् ॥१४९॥
तस्य मित्रमभूदेकं सहमित्रो ऽभिधानतः ।
सर्वत्र मिलितः पानखादनादिभिरैक्यवान् ॥१५०॥
पर्वमित्रो ऽभिधानेन तस्याभूदपरः सुहृत् ।
आगतेषूत्सवेष्वेव सम्मान्यो नान्यदा पुनः ॥१५१॥
प्रणाममित्रनामाभूत्सुहृत्तस्य तृतीयकः ।
यथादर्शनमालापमात्रोपकृतिभाजनम् ॥१५२॥

---

143 b A सार्थयाता॰

पुरोधसो ऽन्यदा तस्य काप्यागसि समागते ।
कुपितस्तं न्यजिघृक्षद्भूपतिश्चण्डशासनः ॥१५३॥
विज्ञाय तदभिप्रायं रात्रावेव पुरोहितः ।
मित्रस्य सहमित्रस्य सदनं दैन्यभाग्ययौ ॥१५४॥
ममाद्य रुष्टो राजेति कथयित्वा पुरोहितः ।
तमूचे त्वद्गृहे मित्र गमयाम्यशुभां दशाम् ॥१५५॥
हे मित्र ज्ञायते मित्रमापत्काले ह्युपस्थिते ।
स्वगृहे गोपयित्वा मां तन्मैत्रीं च कृतार्थय ॥१५६॥
सहमित्रो जगादैवं मैत्री सम्प्रति नावयोः ।
तावदेवावयोर्मैत्री यावद्राजभयं न हि ॥१५७॥
त्वं ममाप्यापदे राजदूषितो मद्गृहे वसन् ।
ऊर्णायुं स्खलदूर्णं हि क्षिपेत्को ऽपि न वेश्मनि ॥१५८॥
तवैकस्य कृते नाहमात्मानं सकुटुम्बकम् ।
अनर्थे पातयिष्यामि व्रजान्यत्रास्तु ते शिवम् ॥१५९॥
एवं च सहमित्रेण सोमदत्तो ऽपमानितः ।
पर्वमित्रस्य मित्रस्य त्वरितं सदनं ययौ ॥१६०॥
राज्ञो ऽप्रसादवृत्तान्तं पर्वमित्रस्य स द्विजः ।
तथैव कथयामास तदाश्रयकृताशयः ॥१६१॥
पर्वमित्रो ऽपि तत्पर्वमैत्र्या निष्क्रयकाम्यया ।
महत्या प्रतिपत्त्या तं ददर्शैवमुवाच च ॥१६२॥

156 d A ०चौरत्नार्थय B चौवरिमार्थयः । 158 a D कर्णायु corr. स्खल-दूर्णं । 160 a C सद्मे । 161 a A C राजा० ।

त्वया पत्रेष्वनेकेषु तैस्तैः सम्भाषणादिभिः ।
स्नेहप्रकारैर्मत्प्राणा अपि क्रीताः सखे ध्रुवम् ॥१६३॥
न भवामि तव भ्रातर्यदि व्यसनभागभाक् ।
कौलीनं मे कुलीनस्य तदानीमुपतिष्ठते ॥१६४॥
किं तु त्वत्प्रीतिविवशो ऽनर्थमप्यात्मनः सहे ।
कुटुम्बमपि मे ऽनर्थं गच्छेदिति तु दुःसहम् ॥१६५॥
कुटुम्बमपि मे प्रेयः प्रेयांस्त्वमपि हे सखे ।
किं करोमि द्विधा चित्त इतो व्याघ्र इतस्तटी ॥१६६॥
डिम्भरूपैरहं ह्यस्मि सकीटकपलाशवत् ।
तस्मात्तेभ्यो ऽनुकम्पस्व स्वस्ति ते ऽन्यत्र गम्यताम् ॥१६७॥
सत्कृत्यापि हि तेनैवं पुरोधाः स निराकृतः ।
निर्दयो तद्गृहाद्दैवे दुष्टे पुत्रो ऽपि दुष्यते ॥१६८॥
आपत्तरं चानुगम्य पर्वमित्रे गते सति ।
दध्यौ पुरोधा दुःप्रापरोधा व्यसनवारिधिः ॥१६९॥
मया ययोरुपकृतं परिणामस्तयोरयम् ।
तन्नवान्यधुना दीनः कस्याहं पारिपार्श्विकः ॥१७०॥
अद्य प्रणाममित्रस्य यामि मित्रस्य सन्निधौ ।
तत्रापि नास्ति प्रत्याशा प्रीतिस्तस्मिंश्च वाङ्मयी ॥१७१॥
यदा विकल्पैः पर्याप्तमाप्तः सो ऽप्यस्ति मे मनाक् ।
प्रेक्षे तमपि कस्यापि को ऽपि स्यादुपकारकृत् ॥१७२॥

---

163 d D ध्रुवं सखे । 166 d C स for ह ।

इति प्रणाममित्रस्य मित्रस्य सदनं ययौ ।
सो ऽप्यभ्यागतमात्रं तमभ्युदस्थात्कृताञ्जलिः ॥१७३॥
उवाच च स्वागतं वः किमवस्था व ईदृशी ।
प्रयोजनं मया किं वो ब्रूत यत्करवाण्यहम् ॥१७४॥
पुरोधा राजहत्यामाख्याय तमदो ऽवदत् ।
त्यक्ष्यामि सीमां राज्ञो ऽस्य साहाय्यं कुरु मे सखे ॥१७५॥
सो ऽप्युवाच प्रियालापैरधमर्णो ऽस्मि ते सखे ।
कृत्वा साहाय्यमधुना भविष्याम्यनृणस्तव ॥१७६॥
मा भैषीरेष ते पृष्ठरक्षो ऽहं मयि जीवति ।
न कश्चिदीश्वरः कर्तुं त्वद्रोम्णो ऽपि हि विप्रियम् ॥१७७॥
पृष्ठोन्नमिततूणीरो ऽधिज्यीकृतशरासनः ।
प्रणाममित्रो ऽग्रे चक्रे निःशङ्कस्तं पुरोहितम् ॥१७८॥
ययौ पुरोहितस्तेन सह स्थानं समीहितम् ।
अन्वभूच्च निराशङ्कस्तत्र वैषयिकं सुखम् ॥१७९॥
अत्र चोपनयो जीवः सोमदत्तस्य सन्निभः ।
सहमित्रस्य मित्रस्य तुल्यो भवति विग्रहः ॥१८०॥
विग्रहो ऽयं कर्मराजकृतायां मरणापदि ।
सत्कृतो ऽपि हि जीवेन सह नैति मनागपि ॥१८१॥
पर्वमित्रसमानाश्च सर्वे स्वजनबान्धवाः ।
श्मशानचत्वरं गत्वा निवर्तन्ते हि ते ऽखिलाः ॥१८२॥

---

174 d MSS ब्रूथ । 180 a C चोपमयो । 181 c D मनाराज ।

प्रणाममित्रसदृशो धर्मः शर्मनिबन्धनम् ।
यः परत्रापि जीवेन गच्छता सह गच्छति ॥१८३॥
न देहिलौकिकसुखास्वादमूढो मनस्विनि ।
परलोकसुखं धर्मं नोपेक्षिष्ये मनागपि ॥१८४॥
जयश्रीस्वाभ्यधास्नाथ तुण्डताण्डवधीनिधे ।
नागश्रीवन्मोहयसि परं कूटकथानकैः ॥१८५॥

18. तथा हि रमणीयाख्ये पुरे राजा कथाप्रियः ।
वारं वारेण पौरेभ्यो ऽचीकथत्प्रत्यहं कथाम् ॥१८६॥
तत्र चासीत्पुरे विप्र एको दारिद्र्यविद्रुतः ।
भ्रान्त्वा भ्रान्त्वाखिलदिनं सो ऽजीवत्कणभिक्षया ॥१८७॥
अन्यदा तस्य विप्रस्य निरक्षरशिरोमणेः ।
कथाकथनवारो ऽभूच्चिन्तयामास चेतसि ॥१८८॥
सन्निपातवती चेयं स्वनामकथने ऽपि हि ।
जिह्वा स्खलति मे नित्यं का कथाकथने कथा ॥१८९॥
कथां कथयितुं नाहं जानामीति यदि ब्रुवे ।
तत्कारामन्दिरं नीये का गतिर्मे भविष्यति ॥१९०॥
कुमारी दुहिता तस्य तं चिन्तास्वपितामनम् ।
दृष्ट्वा पप्रच्छ का चिन्ता तस्या हेतुं जगौ च सः ॥१९१॥
दुहितोवाच मा तात चिन्तासन्तानभाग्भव ।
त्वदीये वारके गत्वा कथयिष्याम्यहं कथाम् ॥१९२॥

---

184 a D नदेह॰ । 185 a A जयश्रीर॰ d D धानिधि । 187 b D दारिद्र c C भिक्षं ।

इति ध्यात्वा परिहितश्वेतवस्त्रा नृपान्तिके ।
गत्वा जयाशिषं दत्त्वा नृपं प्रोचे कथां शृणु ॥१९३॥
राजापि तस्यास्तादृग्वनिःक्षोभत्वेन विस्मितः ।
उत्कर्णो ऽभूत्कथां श्रोतुं गीतिं मृग इवोच्चकैः ॥१९४॥
साप्यारेभे कथयितुमिहैव नगरे द्विजः ।
नागशर्माग्निहोत्र्यस्ति कणभिक्षैकजीविकः ॥१९५॥
सोमश्रीरस्ति तद्भार्या तस्या उदरम्भरहम् ।
नागश्रीर्नाम दुहिता क्रमेणाप्तास्मि यौवनम् ॥१९६॥
पितृभ्यां च प्रदत्ताहं चट्टाय द्विजसूनवे ।
सम्पदामनुरूपो हि स्त्रीणां सम्पद्यते वरः ॥१९७॥
प्रयोजनेन केनाप्यौद्वाहिकेनान्यदा मम ।
अयातां पितरौ ग्रामं मां मुक्त्वैकाकिनीं गृहे ॥१९८॥
ग्रामान्तरं च पितरौ यस्मिन्नेव दिने गतौ ।
तस्मिन्नेव दिने ऽभ्यागाद्विप्रचट्टः स मद्गृहे ॥१९९॥
स्वसम्पदनुसारेण विनापि पितरौ तदा ।
तस्याकार्षमहं स्नानभोजनादिभिरातिथीम् ॥२००॥
खट्वाप्रस्तरणं चैकं गृहसर्वस्वमात्मनः ।
शयनायार्पयामि स्म तस्याहं दिवसात्यये ॥२०१॥
ततो मया चिन्तितं च पर्यङ्को ऽस्य समर्पितः ।
गृहोर्व्यां च सुलद्वीकरा तस्यां शये कथम् ॥२०२॥

194 c A मौन । 197 b A चट्टाय, D corr. बट्टाय । 200 a A C स्वसंपदा, d A विना मे ।

तद्विभ्यती भृशयनाच्छये ऽस्य शयनीयके ।
निशि नीरन्ध्रतमसि न हि द्रक्ष्यति को ऽपि माम् ॥२०३॥
अस्वाप्समिति तत्रैव निर्विकारेण चेतसा ।
मदङ्गस्पर्शमासाद्य स लब्धस्पन्दनातुरः ॥२०४॥
ह्रिया क्षोभेन विषयनिरोधेन च तस्य तु ।
सद्यः शूलं समुत्पन्नं विपन्नस्तद्रुजा च सः ॥२०५॥
अचिन्तयं च भीताहं परासुमवलोक्य तम् ।
मम दोषेण पापायाः प्रापदेष मृतिं द्विजः ॥२०६॥
कस्याद्य कथयाम्येवं क उपायः करोमि किम् ।
एकाकिनी कथं चामुं गृहान्निःसारयाम्यहम् ॥२०७॥
इत्यहं खण्डशो ऽकार्षं कूष्माण्डमिव तद्वपुः ।
गर्तं खनित्वा तत्रैव न्यधामथ निधानवत् ॥२०८॥
पूरयित्वा च तं गर्तं सुसमीकृत्य चोपरि ।
अमार्जयमलिम्पं च ज्ञायते न यथा हि तत् ॥२०९॥
पुष्पैर्गन्धैश्च धूपैश्च स्थानं तद्वासितं मया ।
ग्रामान्तराच्च पितरावागतौ स्तो ममाधुना ॥२१०॥
राजाप्युवाच यदिदं कुमारि कथितं त्वया ।
तत्सर्वमपि किं सत्यं ततः सा पुनरब्रवीत् ॥२११॥
कथानकानि यानि त्वं शृणोष्यन्यानि पार्थिव ।
तानि सत्यानि चेदेतदपि सत्यं तदाखिलम् ॥२१२॥

---

206 d C प्राप एष ।

एवं नागश्रिया राजा यथा विस्मापितस्तथा ।
नाथ प्रतारयस्यस्मान्किं कल्पितकथानकैः ॥२१३॥

19. जम्बूरूचे प्रियाः सर्वा नाहं विषयलोलुपः ।
ललिताङ्गवत्तथा चास्ति श्रीवसन्तपुरं पुरम् ॥२१४॥
तत्राभूद्भूर्विभ्रतीनां वज्रायुध इवाज्ञया ।
राजा शस्त्रायुधो नाम रूपेण कुसुमायुधः ॥२१५॥
तस्याभूल्ललिता देवी देवीव ललिताकृतिः ।
कलानां सकलानामप्येकं विश्रामधाम या ॥२१६॥
मत्तवारणमारुह्य सा विनोदयितुं दृशौ ।
सान्यदा द्रष्टुमारेभे सञ्चरन्तमधो जनम् ॥२१७॥
धम्मिल्लेन द्विमूर्धानमिव स्फारेण हारिणा ।
कस्तूरीपङ्किलश्मश्रु सदानमिव दन्तिनम् ॥२१८॥
वृषस्कन्धं पृथूरस्कं पद्मोपमकरक्रमम् ।
ग्रीवाकरक्रमासक्तजात्यकाञ्चनभूषणम् ॥२१९॥
कर्पूरपूर्णताम्बूलमहद्मुखसौरभम् ।
स्मरजैत्रपताकाभं तिलकालङ्कृतालिकम् ॥२२०॥
अङ्गरागच्छलान्मूर्तं लावण्यमिव बिभ्रतम् ।
धूपायितांशुकामोदमेदुरीकृतवर्त्मकम् ॥२२१॥
वपुःश्रिया श्रियो देव्या द्वितीयमिव नन्दनम् ।

---

213 c D सर्वेदर । 214 d B C om. श्री, A वसन्तपुरपत्तनं । 220 a C कर्पूरपूर । 221 d C विवर्त्मं ।

पुमांसं सा ददर्शैकं युवानं यान्तमध्वनि ॥२२२॥

॥ पंचभिः कुलकं ॥

तद्रूपालोकनोन्मत्तलोचना सा सुलोचना ।
साम्भभाङ्कृतमनाः शालभञ्जीनिभाभवत् ॥२२३॥

दध्यौ च सैवमन्योन्यदोर्लतासन्धबन्धुरम् ।
यद्येष परिरभ्येत स्त्रीजन्म सफलं तदा ॥२२४॥

अहं मनोरममसुं स्वयं दूतीत्वपूर्वकम् ।
उड्डीय गत्वाऽऽशु भजे भवामि यदि पक्षिणी ॥२२५॥

अचिन्तयच्च तत्पार्श्वस्थिता चतुरचेटिका ।
नूनं यून्यत्र रमते स्वामिन्या दृष्टिरुच्चकैः ॥२२६॥

ऊचे च स्वामिनि तव यून्यस्मिन्रमते मनः ।
स विषमत्र कम्रेन्दुर्मामानन्दयति लोचने ॥२२७॥

ललिताचे मनोज्ञासि साधु साधु मनीषिणि ।
जीवामि तद्यदि भजे मनोरममसुं नरम् ॥२२८॥

को ऽसाविति ज्ञापय मां ज्ञापयित्वा तथा कुरु ।
यथा हि मन्त्रमय्यामुं निर्वापयसि मे वपुः ॥२२९॥

गत्वा ज्ञात्वा च सा चेटी पुनरागत्य सत्वरम् ।
राज्ञे व्यज्ञपयद्धैर्यंनाटकैकमहानटी ॥२३०॥

साम्प्रत्यपत्तने ऽत्रैव ललिताङ्गो ऽयमाख्यया ।
समुद्रप्रियसञ्ज्ञस्य सार्थवाहस्य नन्दनः ॥२३१॥

---

225 c A गत्वाशुभजे, C भजे । 226 a D चार्थे । 230 c MSS ०ईंच ।
231 c A [illegible] ।

सौभाग्यमन्मथस्वार्थं स्वामपतिकलानिधिः ।
कुलीनस्य युवा चेति स्थाने स्वामिनि ते मनः ॥२३२॥
अस्याकृत्यनुसारेण गुणानपि हि निश्चिनु ।
यत्राकृतिस्तत्र गुणा इति लोके ऽपि गीयते ॥२३३॥
नारीष्वेकासि गुणिनी त्वं यथैव तथा नृषु ।
तद्द्वयोर्गुणिनोर्योगं घटयामि समादिश ॥२३४॥
एवं कुर्विति राज्ञ्युक्ते तस्या हस्ते च तत्क्षते ।
लेखं प्रेमाङ्कुराम्भोदपयःश्लोकाङ्कमार्पयत् ॥२३५॥
सद्यो दास्यपि सा गत्वा दूतीकर्मैककोविदा ।
जगाद ललिताङ्गाय ललितोपज्ञवाचिकम् ॥२३६॥
प्रवर्त्य तद्गिरं साया ललिताङ्गं चटूक्तिभिः ।
अर्पयामास तं लेखं तस्य प्रीणयितुं मनः ॥२३७॥
स सद्य उद्यत्पुलकः कदम्ब इव पुष्पितः ।
तं प्रेमव्यञ्जकं लेखं वाचयामास तद्यथा ॥२३८॥
यथा दृष्टो ऽसि सुभग तदाद्यपि वराक्यहम् ।
पश्यामि त्वन्मयं सर्वं योगेनानुगृहाण माम् ॥२३९॥
वाचयित्वेति तं लेखं सो ऽवादीदयि कोविदे ।
क्व च सान्तःपुरेवासा वणिग्मात्रः क्व चाप्यहम् ॥२४०॥
न ह्येतच्छक्यते धर्तुं हृदये म्रियते ऽथवा ।
न वक्तुं शक्यते तर्हि यद्ब्रूषे नृपयोषिता ॥२४१॥

236 = D जगाद ।

शक्यते यदि हि स्प्रष्टुं भूस्थेन शशिनः कला ।
तदान्यपुंसां संभोगविषयो राजपत्न्यपि ॥२४२॥
दास्युवाचासहायस्य समस्तमपि दुष्करम् ।
तव त्वहं सहायास्मि चिन्तां सुन्दर मा कृथाः ॥२४३॥
अन्तरन्तःपुरमपि मद्बुद्ध्या त्वमलक्षितः ।
पुष्पमध्ये स्थित इव संचरिष्यस्यलं भिया ॥२४४॥
आह्वयेः समये मां सा तेनेत्युक्ता च चेटिका ।
सद्यो गत्वा तदाचख्यौ राज्ञ्यै सर्वाङ्गसुभ्रुवे ॥२४५॥
तत्सङ्गमं चिन्तयन्त्या ललितायास्तदाद्यपि ।
अन्यदा पत्तने कौमुद्युत्सवो ऽभून्मनोहरः ॥२४६॥
शस्यप्रगल्भज्योत्स्नायां दुग्धाब्धिद्युतिरोचिषि ।
बहिर्भूमौ ययौ राजा तदाखेटकलीलया ॥२४७॥
तदा च विजनीभूते परितो राजवेश्मनि ।
तयैव चेट्या ललिता ललिताङ्गं समाह्वयत् ॥२४८॥
देव्या विनोदमुद्दिश्य सा दास्यन्तःपुरे नरम् ।
नवीनयक्षप्रतिमाव्याजेन समवीविशत् ॥२४९॥
ललिता ललिताङ्गश्च तौ चिराज्ज्ञातसङ्गमौ ।
सस्वजाते मिथो गाढं वल्लीविटपिनाविव ॥२५०॥
विविदुः सौविदाश्चैवमनुमानादिकोविदाः ।
निश्चितं परपुंस्प्रवेशो ऽन्तःपुरे ऽभवत् ॥२५१॥

---

243 c C मया for मम । 245 d C सर्वाङ्ग°, B सर्वाङ्ग° ।

मुषिताः स्मो वयमिति तेषां चिन्तयतामपि ।
समाप्याखेटकक्रीडामाययौ मेदिनीपतिः ॥२५२॥
ते च राज्ञे व्यज्ञपयन्नश्वरत्नादानपूर्वकम् ।
आशङ्कास्माकमस्त्यन्तःपुरे परपुमानिति ॥२५३॥
शब्दायमाने पल्यङ्के विहाय निभृतक्रमम् ।
प्रविवेश निशां नाथः शुद्धान्ते परिमोषिवत् ॥२५४॥
सा चेटी चतुरा द्वारदत्तदृग्मेदिनीपतिम् ।
ददर्श दूरादायान्तं राज्ञीं ज्ञापयति स्म च ॥२५५॥
राज्ञी दास्यपि तं जारमुत्पात्योपरिवर्त्मना ।
बहिश्चिक्षिपतुस्तूर्णं गृहावकरराशिवत् ॥२५६॥
स पपातोत्कचः पश्चात्प्रदेशस्थे महावटे ।
निलीय चाश्वान्तत्रैव गुहायामिव कौशिकः ॥२५७॥
कूपे तथाशुचिस्थाने दुर्गन्धानुभवप्रदे ।
स तस्थौ नरकावास इव पूर्वसुखं स्मरन् ॥२५८॥
अचिन्तयच्च यद्यस्मात्कथंचिद्वटादहम् ।
निर्यास्यामि तदीदृग्घोदर्कैर्भोगैरलं मम ॥२५९॥
राज्ञी दासी च तस्यानुकम्पया तत्र चावटे ।
नित्यं चिक्षिपतुः फेलां तया चैव जिजीव सः ॥२६०॥
प्रावृष्युपस्थितायां च वृष्टिप्रस्रवणाम्भसा ।
स कूपो बिभराश्चक्रे पातकेनेव दुष्टधीः ॥२६१॥

---

252 a C मुषिता । 253 d C पुरपुमा°, D pr. m. 254 d A परमोषिवत् । 256 b MSS °पाट्यो ।

प्रवल्सो ऽम्भसा तेन वाहयित्वातिरंहसा ।
वप्रद्वारिकया बाह्यपरिखायामपात्यत ॥२६२॥
उत्क्षाप्य वारिपूरेणालाबुफलमिवोच्चकैः ।
सो ऽक्षेपि परिखातीरे नीरेणार्तो मुमूर्छ च ॥२६३॥
दैवादागतया तत्र कुलदेवतयेव सः ।
धात्र्या दृष्टश्च नीतश्च सङ्गोप्य निजसद्मनि ॥२६४॥
पाल्यमानः कुटुम्बेनाभ्यङ्गस्नानाशनादिभिः ।
छिन्नप्ररूढशाखीव स बभूव पुनर्नवः ॥२६५॥
अत्र चायमुपनयो यथा हि ललिताङ्गकः ।
कामभोगेष्वनिर्विण्णस्तथा जीवः शरीरिणाम् ॥२६६॥
यथा देवीपरिभोगस्तथा वैषयिकं सुखम् ।
आपातमात्रमधुरं परिणामे ऽतिदारुणम् ॥२६७॥
कूपवाससनिभो गर्भः फेलाहारसमं हि तत् ।
माता जग्धान्नपानाद्यैर्यद्गर्भपरिपोषणम् ॥२६८॥
यो ऽर्द्धाम्बुपूरिताद्विष्टाकूपात् खालेन निर्गमः ।
पुद्गलोपचिताद्गर्भाद्योन्या निर्गमनं हि तत् ॥२६९॥
पतनं परिखोत्सङ्गे यत्प्राकाराद्बहिःस्थिते ।
गर्भवासाद्विपतनं सूतिकाभवने हि तत् ॥२७०॥
या मूर्छा सलिलापूर्णपरिखातीरसंस्थुषः ।
जराय्वश्मपात्कोशात्तद्बहिःस्थस्य मूर्छनम् ॥२७१॥

262 a MSS प्रबलसो । 269 a C पूरितो ख्या । 271 c A जरायुचर्म पातुकेशात्, B C D जराय ।

या धात्रिका यथा चाभूद्देहोपचयकारिणी ।
सा हि कर्मपरीणामसन्ततिर्ज्ञायतामपि ॥२७२॥
भूयो राज्ञी ललिताङ्गं यदि तद्रूपमोहिता ।
वेश्या प्रवेशयेदन्तःपुरान्तः प्रविशेत्स किम् ॥२७३॥
पत्न्यः प्रोचुः कथं नाम प्रविशेत्सो ऽल्पधीरपि ।
अनुभूतं स्मरन्दुःखं विष्टावटनिपातजम् ॥२७४॥
जम्बूरुवाच यो ऽज्ञानवशेन प्रविशेदपि ।
अहं तु नानुतिष्ठामि गर्भसङ्क्रान्तिकारणम् ॥२७५॥
जम्बूनाम्नो ऽथ ताः पत्न्यो विश्रान्तदृढनिश्चयाः ।
प्रतिबोधमुपेयुष्यः क्षमयित्वैवमूचिरे ॥२७६॥
निस्तारयास्मानपि त्वं यथा निस्तरसि स्वयम् ।
नात्मकुक्षिम्भरित्वेन सन्तुष्यन्ति महाशयाः ॥२७७॥
जम्बूनाम्नो ऽथ पितरौ श्वशुरा बन्धवो ऽपि च ।
ऊचुः साधूक्तधर्मासि प्रव्रज्या नो ऽप्यतः परम् ॥२७८॥
प्रभवो ऽप्यभ्यधान्मित्र पितृनापृच्छ्य सत्वरम् ।
परिव्रज्यासहायस्ते भविष्यामि न संशयः ॥२७९॥
अविघ्नमस्तु ते मा स्म प्रतिबन्धं कृथाः सखे ।
इति जम्बूकुमारो ऽपि प्रभवं प्रत्यभाषत ॥२८०॥
विभातायां विभावर्यां जम्बूनामा महामनाः ।
स्वयं संवहति स्मोच्चैरधिनिष्क्रमणोत्सवम् ॥२८१॥

---

273 c d D वेश्या प्रवेशयामासान्तःपुरे प्रविशेत्स किं । 275 d D संक्रामि ।

स्नात्वा कृत्वाङ्गरागं च सर्वाङ्गीनं स पर्यधात् ।
अलङ्कारान्रत्नमयान्कल्पो ऽयमिति कल्पवित् ॥२८२॥
जम्बूरनादृतेनाथ देवेन कृतसन्निधिः ।
उद्वाह्यां नृसहस्रेण शिबिकामारुरोह च ॥२८३॥
[ निनदन्मङ्गलातोद्यः पठन्मङ्गलपाठकः ।
उत्तार्यमाणलवणः स्वकीयमाममङ्गलः ॥* ]
दानं विश्वजनीनं स ददानः कल्पवृक्षवत् ।
प्रशस्यमानो लोकेन जम्बूः काश्यपगोत्रभूः ॥२८४॥
सुधर्मस्वामिगणभृत्पादपद्मपवित्रितम् ।
जगाम तं वनोद्देशं धाम कल्याणसम्पदाम् ॥२८५॥ युग्मं ॥
गणभृद्भूषितोद्यानद्वारदेशे स ईयिवान् ।
याप्ययानादुदतारीत्संसारादिव निर्ममः ॥२८६॥
सुधर्मस्वामिनः पादानापदाम्भोधितारकान् ।
पञ्चाङ्गस्पृष्टभूपीठः स प्रणम्य व्यजिज्ञपत् ॥२८७॥
संसारसागरतरीं प्रव्रज्यां परमेश्वर ।
मम सस्वजनस्यापि देहि धेहि कृपां मयि ॥२८८॥
पञ्चमः श्रीगणधरो ऽप्येवमभ्यर्थितस्तदा ।
तस्मै सपरिवाराय ददौ दीक्षां यथाविधि ॥२८९॥
पितृनापृच्छ्य चान्येद्युः प्रभवो ऽपि समागतः ।
जम्बूकुमारमनुयान्परिव्रज्यामुपाददे ॥२९०॥

---

* This verse is wanting in all MSS. and is added in C in the margin sec. m.

श्रीजम्बूस्वामिपादाब्जमरालः प्रभवोऽभवत् ।
शिष्यभावेन तस्यैव दत्तः स गुरुणा यतः ॥२९१॥
श्रीसुधर्मगणभृत्पदाम्बुजोपासनभ्रमरतां समुद्वहन् ।
दुःसहानगणयन्परीषहानार्यभिर्विहरति स्म मेदिनीम् ॥२९२॥

इत्याचार्यश्रीहेमचन्द्रविरचिते परिशिष्टपर्वणि स्थविरावलीचरिते महाकाव्ये सिद्धिबुद्धिकथाजात्याश्वकिशोरकथाग्रामकूटसुतकथाबोल्लककथामासाहसशकुनिकथाविद्युन्कथाविप्रदुहितृनागश्रीकथाललिताङ्गकथासपरिवारजम्बूप्रव्रज्याप्रभवप्रव्रज्यावर्णनो नाम तृतीयः सर्गः ॥

# CANTO IV.



अन्यदा श्रीगणधरः सुधर्मा विहरन्भुवि ।
जगाम चम्पां नगरीं जम्बूस्वाम्यादिशिष्ययुक् ॥१॥
पुरीपरिसरोद्याने गणभृत्परमेश्वरः ।
समवासरदुद्भूतधर्मकल्पद्रुमोपमः ॥२॥
सुधर्मस्वामिपादाब्जवन्दनाय पुरीजनः ।
गन्तुं प्रववृते भक्त्या स्वमेखोत्कर्षभाग्मनाः ॥३॥
नागर्यः पादचारेण झणज्झणितनूपुराः ।
काश्चिज्जग्मुः श्लथीभूतधम्मिल्लभ्रंशिगर्भकाः ॥४॥
काश्चिच्च रथमारुह्य नागर्यः पतिभिः सह ।
तैस्तैः प्राजयामासुस्त्वरितत्वरितं रथात् ॥५॥
काश्चित्त्यक्तान्यकर्माणः श्राविका निर्ययुर्गृहात् ।
कन्धारोपितशिशवः कपिमत्पादपोपमाः ॥६॥
अश्वारूढा ययुः केऽपि महेभ्याश्चलकुण्डलाः ।
श्वेतातपत्रैः कुर्वन्तो दिवमुत्पुण्डरीकिणीम् ॥७॥
श्रीमतां गच्छतां तूर्णं मिथःसङ्घर्षताडनात् ।
हारमुक्ताफलैर्भ्रष्टैर्दन्तुरा मार्गभूरभूत् ॥८॥
तदा तस्यां नगर्यां च कूणिकः पृथिवीपतिः ।
दृष्ट्वायान्तं तथा लोकमिति पप्रच्छ वेत्रिणम् ॥९॥

---

4 b D रथाचित ।

किं याचाद्य पुरोपान्ते देव्याः कस्याश्चिदुद्यता ।
कस्यापि हि महेभ्यस्य किमुद्यापनिकोत्सवः ॥१०॥
किं मधाग्कौमुदीप्रायो महो वा कश्चिदागतः ।
पूजाविशेषो यदि वोद्यानचैत्ये प्रवर्तते ॥११॥
किं वा जैनमुनिः को ऽपि महात्मा समवासरत् ।
यद्देवमखिलो याति त्वरितं नगरीजनः ॥१२॥

॥ त्रिभिर्विशेषकम् ॥

वेत्री मदैव विज्ञाय नरेन्द्राय व्यजिज्ञपत् ।
इतो ऽस्ति समवसृतः सुधर्मा गणभृद्वरः ॥१३॥
वन्दितुं गणभृत्पादान्सर्वो ऽयं याति पूर्जनः ।
एकातपत्रमार्हद्धर्मराज्यं विजयते तव ॥१४॥
राजा प्रोवाच हे वेत्रिन्धन्यो ऽयं नगरीजनः ।
य एवं त्वरते हन्त सुधर्मस्वामिवन्दने ॥१५॥
अहो जाग्रदवस्थो ऽपि सुषुप्तावस्थतामगाम् ।
यदद्य गणभृद्देवमपि न ज्ञातवानहम् ॥१६॥
मद्गत्वा गणभृत्पादान्वन्दे ऽहमपि सत्वरम् ।
तिष्ठन्ति ते हि नैकत्राप्रतिबद्धाः समीरवत् ॥१७॥
इत्युत्थायासनाद्राजा स्मेरराजीवलोचनः ।
चन्द्रांशुभिरिव व्यूते पर्यधाच्छ्वेतवाससी ॥१८॥
आमुचत्कर्णतलयोरथ मौक्तिककुण्डले ।
सुधाकुण्डे इव स्वच्छमुक्तांशुचयपूरिते ॥१९॥

---

12 A त्रभि संरंकः। 17 c D नैकत्र।

क्षिप्ता च मञ्चिकां कूपे तत्रारोप्य च कल्पकम् ।
तदैवाकर्षयामास नन्दो निधिमिवात्मनः ॥११२॥
अपि पङ्कुपलाभं शिबिकामधिरोप्य तम् ।
वप्रस्योपर्यभ्रमयन्नृपः पूर्देवतामिव ॥११३॥
तं दृष्ट्वा वैरिणो दध्युर्नन्दो ऽभूदबलः खलु ।
यदेषो ऽस्मान्भीषयते दर्शयन्कूटकल्पकम् ॥११४॥
ततो बाढमुपद्रोतुं ते प्रावर्तन्त वैरिणः ।
अनुत्पन्नभया यन्त्रप्रतियन्त्रादिकल्पनैः ॥११५॥
ततश्च कल्पकः प्रेष्य दूतं तानेवमब्रवीत् ।
एतु वः को ऽप्यभिमतो ऽन्तर्गङ्गं नावमास्थितः ॥११६॥
यथाहमपि नौयानो जल्पित्वा तेन धीमता ।
करोमि सन्धिमन्यद्वा भवतां यदभीप्सितम् ॥११७॥
सान्धिविग्रहिकस्तेषां कल्पकश्चापि नौस्थितौ ।
मिलितावाभिमुख्येन चक्रावक्रपदाविव ॥११८॥
तत्र कश्चिदेकस्येक्षुकलापं करस्थितम् ।
निरीक्ष्य कल्पको मन्त्री तमूचे ऽङ्गुलिसंज्ञया ॥११८॥
यद्यमुष्येक्षुभारस्य मूलं प्रान्तश्च कर्त्यते ।
पतन्मध्यप्रदेशस्य तदा किमुपतिष्ठते ॥१२०॥
सान्धिविग्रहिकः सो ऽथ विद्वानपि सुधीरपि ।
न तदाशयमज्ञासीदीदृग्यत्तु तदाशयः ॥१२१॥

120 a C प्रदेशस्था । 121 a D चापि ।

यथेक्षुयष्टिर्मूलेन प्रान्तेन च विवर्धते ।
उभाभ्यामेव सन्धिभ्यां तथा क्षत्रियसन्ततिः ॥१२२॥
तत्र चैकः सत्यसन्धिर्यत्रोक्तं नान्यथा भवेत् ।
प्रपञ्चसन्धिरपरो मायया यः प्रतन्यते ॥१२३॥
अविश्वासेन वो नन्दे सत्यसन्धेर्न गोचरः ।
प्रपञ्चसन्धिस्तु कथं भावी वो मयि तद्विदि ॥१२४॥
निःसन्धिसन्धास्तद्यूयमुपजीव्या भविष्यथ ।
निकृत्तमूलप्रान्तेक्षुयष्टिवन्नन्दभूपतेः ॥१२५॥
पुनश्च तत्प्रदेशस्थाभीर्या मूर्धन्यदर्शयत् ।
दण्डाहतां दधिस्थालीं कल्पको ह्यासमञ्जया ॥१२६॥
प्रागवद्भावार्थमज्ञासीत्प्रधानपुरुषो न सः ।
कल्पकामात्यहृदयभावार्थो ऽयमभूत्पुनः ॥१२७॥
स्वपक्षसंहतिस्थाली महोद्दण्डाहता यदि ।
ततः स्यादिष्टकाकारं विकीर्णं दधिवद्दलम् ॥१२८॥
पुनः स्वनात्वा तस्याः कल्पकस्त्रिः प्रदक्षिणम् ।
चकार तदभिप्रायं तथापि न विवेद सः ॥१२९॥
भावार्थस्त्वेष सद्भावा यथा शौरायता तव ।
यथाग्नेस्तेजसा तेजो भवतामावरिष्यते ॥१३०॥
मन्त्रान्वये ऽपि भावार्थमज्ञासत्कल्पकस्य सः ।
ऊहापोहपरप्रज्ञो व्याप्तास्यः काकपोतवत् ॥१३१॥

---

123 L C सत्य° । 130 J C D °वरिष्यते ।

स्वस्थानं कल्पको ऽथागात्सान्धिविग्रहिकः स तु ।
तद्भावमविदन्नीचापन्नः स्वशिबिरं ययौ ॥१३२॥
स सन्धिविग्रहपुमान्निजैः पृष्टो विषादभाक् ।
अवोचदत्यसम्बन्धप्रलापी कल्पकद्विजः ॥१३३॥
पुनः पुनस्स तैः पृष्टो न स किञ्चिदवोचत ।
स हि जिह्राय तद्भावं नाज्ञासिषमिति ब्रुवम् ॥१३४॥
मिलितः कल्पकस्यायमपीति कृतनिश्चयाः ।
ते ऽथ सामन्तराजानः पलायन्त दिशो दिशम् ॥१३५॥
ततः पलायमानानां तेषां कल्पकशासनात् ।
हस्त्यश्वरत्नकोशादि जग्राहोच्छिद्य नन्दराट् ॥१३६॥
नन्दो ऽपि तं निजग्राह प्राक्तनं दुष्टमन्त्रिणम् ।
भक्तस्य कल्पकस्यायमनर्थकृदिति क्रुधा ।१३७॥

नन्दश्रियां रक्षणदीक्षितस्सः
सुधीर्नयोपायमहीमहीनः ।
इमां कल्पको नन्दनरेश्वराज्ञा-
नियन्त्रितां मन्त्रिवरश्चकार ॥१३८॥

इत्याचार्यश्रीहेमचन्द्रविरचिते परिशिष्टपर्वणि स्थविरावलीचरिते महाकाव्ये कल्पकामात्यसङ्कीर्तनो नाम सप्तमः सर्गः ॥

---

# CANTO VIII.



कल्पकः पुनरुत्पन्नानेकपुत्रो धियां निधिः ।
सुचिरं नन्दराजस्य मुद्राव्यापारमन्वगात् ॥१॥
नन्दस्य वंशे कालेन नन्दाः सप्ताभवन्नृपाः ।
तेषां च मन्त्रिणो ऽभूवन्भूयांसः कल्पकान्वयाः ॥२॥
ततस्त्रिखण्डपृथिवीपतिः पतिरिव श्रियः ।
समुत्खातद्विषत्कन्दो नन्दो ऽभून्नवमो नृपः ॥३॥
विसङ्कटः श्रियां वासो ऽसङ्कटः शकटो धियाम् ।
शकटाल इति तस्य मन्त्र्यभूत्कल्पकान्वयः ॥४॥
तस्य लक्ष्मीवती नाम लक्ष्मीरिव वपुष्मती ।
सधर्मचारिण्यभवच्छीलालङ्कारधारिणी ॥५॥
तयोश्च ज्येष्ठतनयो विनयालङ्कृतो ऽभवत् ।
अस्थूलधीः स्थूलभद्रो भद्राकारनिशाकरः ॥६॥
भक्तिनिष्ठः कनिष्ठो ऽभूच्छ्रीयको नन्दनस्तयोः ।
नन्दराड्हृदयानन्दामन्दगोशीर्षचन्दनः ॥७॥
पुरे ऽभूत्तत्र कोशेति वेश्या रूपश्रियोर्वशी ।
यस्यां स्मरस्य चेतो ऽभूत् जीवनौषधिः ॥८॥
भुञ्जानो विविधान्भोगान्स्थूलभद्रो दिवानिशम् ।
उवास वसतौ तस्या द्वादशाब्दानि सन्मनाः ॥९॥
श्रीयकस्तु पुरो ऽभूद्धि विश्वस्तभाजनम् ।
द्वितीयमिव हृदयं नन्दस्य पृथिवीपतेः ॥१०॥

तत्र चासीद्वररुचिर्नाम द्विजवराग्रणीः ।
कवीनां वादिनां वैयाकरणानां शिरोमणिः ॥११॥
स्वयंकृतैर्नवनवैरष्टोत्तरशतेन सः ।
वृत्तैः प्रशस्तो ऽनुदिनं नृपावलगने सुधीः ॥१२॥
मिथ्यादृगिति तं मन्त्री प्रशशंस न जातुचित् ।
तुष्टो ऽप्यसौ तुष्टिदानं न ददौ नृपतिस्ततः ॥१३॥
ज्ञात्वा वररुचिस्तत्र दानाप्रापणकारणम् ।
आराधयितुमारेभे गृहिणीं तस्य मन्त्रिणः ॥१४॥
सन्तुष्टया तयान्येद्युः कार्यं पृष्टो ऽब्रवीदिदम् ।
राज्ञः पुरस्तान्मे काव्यं तव भर्ता प्रशंसतु ॥१५॥
तया तदुपरोधेन तद्विज्ञप्तो ऽवदत्पतिः ।
मिथ्यादृष्टेरमुष्याहं प्रशंसामि कथं वचः ॥१६॥
तयोक्तः साग्रहं मन्त्री तत्तथा प्रत्यपद्यत ।
अन्धस्त्रीबालमूर्खाणामाग्रहो बलवान्खलु ॥१७॥
राज्ञः पुरस्तात्पठतः काव्यं वररुचेस्ततः ।
अहो सुभाषितमिति वर्णयामास मन्त्रिराट् ॥१८॥
दीनारशतमष्टाग्रं ततो ऽस्मै नृपतिर्ददौ ।
राजमान्यस्य वाचापि जीव्यते ह्यनुकूलया ॥१९॥
दीनाराष्टोत्तरशते दीयमाने दिने दिने ।
किमेतद्दीयत इति भूपं मन्त्री व्यजिज्ञपत् ॥२०॥
अथोचे नृपतिर्मन्त्रिन्दत्तो ऽस्मै त्वत्प्रशंसया ।

12 d D corrects नृपतिलयने ।

वयं यदि स्वयं दक्षौ दक्षः किं न पुरा ततः ॥२१॥
मन्त्र्यप्यूचे मया देव प्रशंसा नास्य निर्मिता ।
काव्यानि परकीयाणि प्राशंसिषमहं तदा ॥२२॥
पुरो नः परकाव्यानि स्वकीकृत्य पठत्ययम् ।
किमेतत्सत्यभावेनेत्यभाषत नृपस्ततः ॥२३॥
एतत्पठितकाव्यानि पठन्तिर्बालिका अपि ।
दर्शयिष्यामि वः प्रातरित्यूचे सचिवोऽपि च ॥२४॥
यक्षा यक्षदत्ता भूता भूतदत्तैणिका तथा ।
वेणा रेणेति सप्तासन्प्राज्ञाः पुत्र्यस्तु मन्त्रिणः ॥२५॥
गृह्णाति व्यायसी तासां सकृदुक्तं तथेतराः ।
द्वित्र्यादिवारक्रमतो गृह्णन्ति स्म यथाक्रमम् ॥२६॥
राज्ञः समीपं सचिवो द्वितीयेऽह्नि निनाय ताः ।
तिरस्करिण्यन्तरिताः समुपावेशयच्च सः ॥२७॥
अष्टोत्तरशतं श्लोकान्स्वयं निर्माय नैत्यिकान् ।
ऊचे वररुचिस्तास्तु यथाज्येष्ठमनूचिरे ॥२८॥
ततो वररुचे रुष्टो राजा दानं न्यवारयत् ।
उपायाः सचिवानां हि निग्रहानुग्रहक्षमाः ॥२९॥
ततो वररुचिर्गत्वा यन्त्रं गङ्गाजले न्यधात् ।
तन्मध्ये वस्त्रबद्धं च दीनारशतमष्टयुक् ॥३०॥
प्रातर्गङ्गामसौ स्तुत्वा यन्त्रमाक्रामदङ्घ्रिणा ।

26 b C सकृदुक्तं । 28 b D नैत्यकान् । b c A ऊचे वररुचिर्मुदा सद्यश्रुता पुत्रकास्तु ।

तत्र चासीद्वररुचिर्नाम द्विजवराग्रणीः ।
कवीनां वादिनां वैयाकरणानां शिरोमणिः ॥११॥
स्वयङ्कृतैर्नवनवैरष्टोत्तरशतेन सः ।
वृत्तैः प्रवृत्तो ऽनुदिनं नृपावलगने सुधीः ॥१२॥
मिथ्यादृगिति तं मन्त्री प्रशशंस न जातुचित् ।
तुष्टो ऽप्यसौ तुष्टिदानं न ददौ नृपतिस्ततः ॥१३॥
ज्ञात्वा वररुचिस्तच्च दानाप्रापणकारणम् ।
आराधयितुमारेभे गृहिणीं तस्य मन्त्रिणः ॥१४॥
सन्तुष्टया तयान्येद्युः कार्यं पृष्टो ऽब्रवीदिदम् ।
राज्ञः पुरस्तान्मे काव्यं तव भर्ता प्रशंसतु ॥१५॥
तया तदुपरोधेन तद्विज्ञप्तो ऽवदत्पतिः ।
मिथ्यादृष्टेरमुष्याहं प्रशंसामि कथं वचः ॥१६॥
तयोक्तः साग्रहं मन्त्री तत्तथा प्रत्यपद्यत ।
अन्धस्त्रीबालमूर्खाणामाग्रहो बलवान्खलु ॥१७॥
राज्ञः पुरस्तात्पठतः काव्यं वररुचेस्ततः ।
अहो सुभाषितमिति वर्णयामास मन्त्रिराट् ॥१८॥
दीनारशतमष्टाग्रं ततो ऽस्मै नृपतिर्ददौ ।
राजमान्यस्य वाचापि जीव्यते ह्यनुकूलया ॥१९॥
दीनाराष्टोत्तरशते दीयमाने दिने दिने ।
किमेतद्दीयत इति भूपं मन्त्री व्यजिज्ञपत् ॥२०॥
अथोचे नृपतिर्मन्त्रिन्दत्तो ऽस्मै त्वत्प्रशंसया ।

12 d D corrects नृपतिलयने ।

उपलक्ष्य गृहाणेदं निजद्रव्यमिति ब्रुवन् ।
सोऽर्पयामास दीनारग्रन्थिं वररुचेः करे ॥४२॥
दीनारग्रन्थिना तेनोत्सर्पिहृद्ग्रन्थिनेव सः ।
दशामासादयामास मरणादपि दुःसहाम् ॥४३॥
विप्रतारयितुं लोकं सायमत्र निपत्यसौ ।
द्रष्टुं प्रातः पुनर्गच्छतीत्यूचे सचिवो नृपम् ॥४४॥
साधु जातमिदं कस्मेत्यालपन्मन्त्रिपुङ्गवम् ।
विस्मयस्मेरनयनः स्ववेश्मागान्महीपतिः ॥४५॥
असमर्थो वररुचिः प्रतीकारं विचिन्तयन् ।
गृहस्वरूपं सचिवस्यापृच्छच्चेटिकादिकम् ॥४६॥
तस्याथ कथयामास काचित्सचिवचेट्यदः ।
भूपतिः श्रीयकोद्वाहे भोक्ष्यते मन्त्रिवेश्मनि ॥४७॥
सज्ज्यते चात्र शस्त्रादि दातुं नन्दाय मन्त्रिणा ।
शस्त्रप्रियाणां राज्ञां हि शस्त्रमाद्यमुपायनम् ॥४८॥
समासाद्य छलशस्त्वच्छलं वररुचिस्ततः ।
पणकादि प्रदायेति डिम्भरूपाण्यपाठयत् ॥४९॥
न वेत्ति राजा यदसौ शकटालः करिष्यति ।
व्यापाद्य नन्दं तद्राज्ये श्रीयकं स्थापयिष्यति ॥५०॥
स्थाने स्थाने पठन्ति स्म डिम्भा एव दिने दिने ।
जनश्रुत्या तदश्रौषीदिति चाचिन्तयन्नृपः ॥५१॥
बालका यच्च भाषन्ते भाषन्ते यच्च योषितः ।

48 a MSS. सज्ज्य°, D सज्जीते चात्र शस्त्रादि। 51 a A adds before स्थाने, एष लोप न बाधर।

दीनारास्ते च तत्पाणावुत्पत्य न्यपतंस्ततः ॥३१॥
स एवं विदधे नित्यं जनस्तेन विसिस्मिये ।
तच्च श्रुत्वा जनश्रुत्या राजाशंसत मन्त्रिणे ॥३२॥
इदं यद्यस्ति सत्यं तत्प्रातर्वीक्षामहे स्वयम्
इत्युक्तो मन्त्रिणा राजा तत्तथा प्रत्यपद्यत ॥३३॥
दत्त्वा शिक्षां चरः सायं प्रेषितस्तत्र मन्त्रिणा ।
शरस्तम्बनिलीनो ऽस्थात्पक्षीवानुपलक्षितः ॥३४॥
तदा वररुचिर्गत्वा कल्यं मन्दाकिनीजले ।
दीनाराष्टोत्तरशतग्रन्थिं न्यस्य ययौ गृहे ॥३५॥
तज्जीवितमिवादाय दीनारग्रन्थिमादरात् ।
चरः समर्पयामास प्रच्छन्नं वरमन्त्रिणे ॥३६॥
अथ गुप्तात्तदीनारग्रन्थिर्मन्त्री निशात्यये ।
ययौ राज्ञा समं गङ्गामागाद्वररुचिस्तदा ॥३७॥
द्रष्टुकामं नृपं दृष्ट्वोत्कृष्टमानी सविस्तरम् ।
स्तोतुं प्रववृते गङ्गां मूढो वररुचिस्ततः ॥३८॥
स्तुत्यन्ते ऽचालयद्यन्त्रं यदा वररुचिः परम् ।
दीनारग्रन्थिरुत्पत्य नापतत्पाणिकोटरे ॥३९॥
ग्रन्थिं गवेषयामास पाणिना तज्जले ततः ।
सो ऽस्थादपश्यंस्तूष्णीको धूर्तो धृष्टो हि मौनभाक् ॥४०॥
इत्यूचे स महामात्यः किं ते दत्ते न जाह्नवी ।
न्यासीकृतमपि द्रव्यं गवेषयसि यन्मुहुः ॥४१॥

---

34 L A सोम for सायं ।

उपलक्ष्य गृहाणेदं निजद्रव्यमिति ब्रुवन् ।
सोऽर्पयामास दीनारग्रन्थिं वररुचेः करे ॥४२॥
दीनारग्रन्थिना तेनोत्सर्पिहृद्ग्रन्थिनेव सः ।
दशामासादयामास मरणादपि दुःसहाम् ॥४३॥
विप्रतारयितुं लोकं मायमच क्षिपत्यसौ ।
द्रव्यं प्रातः पुनर्गृह्णातीत्यूचे सचिवो नृपम् ॥४४॥
साधु जातमिदं कष्टेत्यालपन्मन्त्रिपुङ्गवम् ।
विस्मयस्मेरनयनः स्ववेश्मागान्महीपतिः ॥४५॥
अमर्षणो वररुचिः प्रतीकारं विचिन्तयन् ।
गृहस्वरूपं सचिवस्याप्रच्छच्चेटिकादिकम् ॥४६॥
तस्याय कथयामास काचित्सचिवचेट्यदः ।
भूपतिः श्रीयकोद्वाहे भोक्ष्यते मन्त्रिवेश्मनि ॥४७॥
सज्यते चात्र शस्त्रादि दातुं नन्दाय मन्त्रिणा ।
शस्त्रप्रियाणां राज्ञां हि शस्त्रमाद्यमुपायनम् ॥४८॥
समासाद्य छलग्रस्तच्छलं वररुचिस्ततः ।
चणकादि प्रदायेति डिम्भरूपाण्यपाठयत् ॥४९॥
न वेत्ति राजा यदसौ शकटालः करिष्यति ।
व्यापाद्य नन्दं तद्राज्ये श्रीयकं स्थापयिष्यति ॥५०॥
स्थाने स्थाने पठन्ति स्म डिम्भा एव दिने दिने ।
जनश्रुत्या तदश्रौषीदिति चाचिन्तयन्नृपः ॥५१॥
बालका यत्र भाषन्ते भाषन्ते यत्र योषितः ।

48 a MSS. सज्ज°, D सज्जते चात्र शस्त्रादि। 51 a A adds before स्थाने, एव सौंय म चाचर।

उत्पातिकी च या भाषा सा भवत्यन्यथा न हि ॥५२॥
तत्प्रत्ययार्थं राज्ञाथ प्रेषितो मन्त्रिवेश्मनि ।
पुरुषः सर्वमागत्य यथादृष्टं व्यजिज्ञपत् ॥५३॥
ततश्च सेवावसरे मन्त्रिणः समुपेयुषः ।
प्रणामं कुर्वतो राजा कोपात्तस्थौ पराङ्मुखः ॥५४॥
तद्भावज्ञो ऽथ वेश्मैत्यामात्यः श्रीयकमब्रवीत् ।
राज्ञो ऽस्मि ज्ञापितः केनाप्यभक्तो विद्विषन्निव ॥५५॥
अथावकस्मादस्माकं कुलक्षय उपस्थितः ।
रक्ष्यते तस्य कुरुषे यद्यादेशमिमं मम ॥५६॥
नमयामि यदा राज्ञे शिरश्छिन्द्यास्तदासिना ।
अभक्तः स्वामिनो वध्यः पितापीति वदेस्ततः ॥५७॥
विपन्ने मयि जरसाप्येवं याते परासुताम् ।
त्वं मत्कुलगृहस्तम्भो भविष्यसि चिरं ततः ॥५८॥
श्रीयको ऽपि रुदन्नेवमवदद्गद्गदस्वरम् ।
तात घोरमिदं कर्म श्वपचो ऽपि करोति किम् ॥५९॥
अमात्यो ऽप्यब्रवीदेवमेवं कुर्वन्विचारणाम् ।
मनोरथान्पूरयसि वैरिणामेव केवलम् ॥६०॥
राजा यम इवोद्दण्डः सकुटुम्बं निहन्ति माम् ।
यावत्तावन्ममैकस्य क्षयाद्रक्ष कुटुम्बकम् ॥६१॥
मुखे विषं तालपुटं न्यस्य नंस्यामि भूपतिम् ।
शिरः परासोर्मे छिन्द्याः पितृहत्या न ते ततः ॥६२॥

---

53 a A स्वर्गमागत्य । 60 b A C विचारणां ।

पित्रैवं बोधितस्तत्स प्रतिपेदे चकार च ।
शुभोदर्काय धीमन्तः कुर्वन्त्यापातदारुणम् ॥६३॥
भवता किमिदं वत्स विहितं कर्म दुष्करम् ।
ससम्भ्रममिति प्रोक्तो नृपेण श्रीयको ऽवदत् ॥६४॥
यदैव स्वामिना ज्ञातो द्रोह्ययं निहतस्तदा ।
भर्तृचित्तानुसारेण भृत्यानां हि प्रवर्तनम् ॥६५॥
भृत्यानां युज्यते दोषे स्वयं ज्ञाते विचारणा ।
स्वामिज्ञाते प्रतीकारो युज्यते न विचारणा ॥६६॥
ततौर्ध्वदेहिकं नन्दस्ततः श्रीयकमब्रवीत् ।
सर्वव्यापारघटिता मुद्रेयं गृह्यतामिति ॥६७॥
अथ विज्ञपयामास प्रणम्य श्रीयको नृपम् ।
स्थूलभद्राभिधानो ऽस्ति पितृतुल्यो ममाग्रजः ॥६८॥
पितृप्रसादान्निर्बाधं कोशायास्तु निकेतने ।
भोगानुपभुञ्जानस्य तस्याब्दा द्वादशागमन् ॥६९॥
आहूयाथ स्थूलभद्रस्तमर्थं प्रभुणोदितः ।
पर्यालोच्यामुमर्थं तु करिष्यामीत्यभाषत ॥७०॥
अद्यैवालोचयेत्युक्तः स्थूलभद्रो महीभुजा ।
अशोकवनिकां गत्वा विममर्शेति चेतसा ॥७१॥
शयनं भोजनं स्नानमन्ये ऽपि सुखहेतवः ।
काले ऽपि नानुभूयन्ते रोरैरिव नियोगिभिः ॥७२॥

---

72 d D i. m. ( रोरैः ) = दरिद्रैः ।

नियोगिनां स्वान्यराष्ट्रचिन्ताव्यग्रे च चेतसि ।
प्रेयसीनां नावकाशः पूर्णकुम्भे ऽम्भसामिव ॥७३॥
त्यक्त्वा सर्वमपि स्वार्थं राजार्थं कुर्वतामपि ।
उपद्रवन्ति पिशुना उद्बद्धानामिव द्विकाः ॥७४॥
यथा स्वदेहद्रविणव्ययेनापि प्रयत्यते ।
राजार्थे तद्वदात्मार्थे यत्यते किं न धीमता ॥७५॥
विचिन्त्यैवं व्यधात्केशोत्पाटनं पञ्चमुष्टिभिः ।
रत्नकम्बलदशाभी रजोहरणमप्यथ ॥७६॥
ततश्च स महाभागो गत्वा सदसि पार्थिवं ।
आलोचितमिदं धर्मलाभः स्तादित्यवोचत ॥७७॥
ततः स राजसदनाद्गुहाया इव केसरी ।
निःससार महासारः संसारकरिरोपणः ॥७८॥
किमेष कपटं कृत्वा यायी वेश्यागृहं पुनः ।
इत्यप्रत्ययतः क्ष्मापो गवाक्षेण निरैक्षत ।७९॥
प्रदेशे शवदुर्गन्धे ऽप्यविकूणितनासिकम् ।
यान्तं दृष्ट्वा स्थूलभद्रं नरेन्द्रो ऽधूनयच्छिरः ॥८०॥
भगवान्वीतरागो ऽयमस्मिन्धिग्मे कुचिन्तितम् ।
इत्यात्मानं निनिन्दोच्चैर्नन्दस्तमभिनन्दयन् ॥८१॥
स्थूलभद्रो ऽपि गत्वा श्रीसम्भूतिविजयान्तिके ।
दीक्षां सामायिकोच्चारपूर्विकां प्रत्यपद्यत ॥८२॥
गृहीत्वा श्रीयकं दोष्णि ततो नन्दः सगौरवम् ।
मुद्राधिकारे निःशेषव्यापारे महिते न्यधात् ॥८३॥

चकार श्रीयको राज्यचिन्तामवहितः सदा ।
साक्षादिव शकटालः प्रकृष्टनयपाटवात् ॥८४॥
स नित्यमपि कोशाया विनीतः सदने ययौ ।
स्नेहाद्भ्रातुस्तत्प्रियापि कुलीनैर्बहुमन्यते ॥८५॥
स्थूलभद्रवियोगार्ता श्रीयकं प्रेक्ष्य सारुदत् ।
दृष्टे दृष्टे हि दुःखार्ता न दुःखं धर्तुमीशते ॥८६॥
ततस्तां श्रीयको ऽवोचदार्ये किं कुर्महे वयम् ।
असौ वररुचिः पापो ऽघातयज्जनकं हि नः ॥८७॥
अकाण्डोत्थितवज्राग्निप्रदीपनसहोदरम् ।
स्थूलभद्रवियोगं च भवत्या अकरोदयम् ॥८८॥
तज्जाम्यास्तूपकोशायां यावद्रक्तो ऽस्त्यसौ खलः ।
तावत्प्रतिक्रियां काञ्चिद्विचिन्तय मनस्विनि ॥८९॥
तदादिशोपकोशां यत्प्रतार्य कथमप्यसौ ।
विधीयतां वररुचिर्मद्यपानरुचिस्त्वया ॥९०॥
प्रेयोवियोजनाद्वैराद्दाक्षिण्याद्देवरस्य च ।
तत्प्रतिज्ञाय सा सद्यो ऽप्युपकोशां समादिशत् ॥९१॥
कोशायाश्च निदेशेनोपकोशा तं तथाभ्यधात् ।
यथा पपौ सुरामेष स्त्रीवशैः क्रियते न किम् ॥९२॥
सुरापानं वररुचिः स्वैरं भट्टो ऽथ कारितः ।
उपकोशेति कोशायै शशंसाथ निशात्यये ॥९३॥
अथ कोशामुखात्तत्र शुश्राव श्रीयको ऽपि तत् ।

84 d D प्रकृष्टमत° । 88 d A वज्राग्नि° ।

मेने च पिहृवैरस्य विहितं प्रतियातनम् ॥९४॥
शकटालमहामात्यात्ययात्प्रभृति सो ऽप्यभूत् ।
भट्टो वररुचिर्भूपसेवावसरतत्परः ॥९५॥
स प्रत्यहं राजकुले सेवाकाले समापतन् ।
राज्ञा च राजलोकैश्च सगौरवमदृश्यत ॥९६॥
अन्यदा नन्दराड्मन्त्रिगुणस्मरणविक्लवः ।
सदसि श्रीयकामात्यं जगादैवं सगद्गदम् ॥९७॥
भक्तिमाञ्शक्तिमान्नित्यं शकटाला महामतिः ।
अभवन्नो महामात्यः शक्रस्येव बृहस्पतिः ॥९८॥
एवमेव विपन्नो ऽसौ दैवादद्य करोमि किम् ।
मन्ये शून्यमिवास्थानमहं तेन विनात्मनः ॥९९॥
उवाच श्रीयको ऽप्येवं किं देवेह विदध्महे ।
इदं वररुचिः सर्वं पापं व्यधित मद्यपः ॥१००॥
सत्यमेव सुरां भट्टः पिबतीति नृपोदिते ।
श्वो ऽमुं दर्शयितास्मीति श्रीयकः प्रत्यभाषत ॥१०१॥
श्रीयकस्य द्वितीये ऽह्नि सर्वेषामीयुषां सदः ।
स्वपुंसा शिक्षितेनाग्र्यं पद्ममेकैकमार्पयत् ॥१०२॥
तत्कालं मदनफलरसभावनयाञ्चितम् ।
दुरात्मनो वररुचेरर्पयामास पङ्कजम् ॥१०३॥
कुतस्त्यमद्भुतामोदमिदमित्यभिवर्णिनः ।
घ्रातुं राजादयो निन्युर्नासायां स्वं स्वमम्बुजम् ॥१०४॥
सो ऽपि भट्टो ऽनयद्घ्रातुं घाणाग्रे पङ्कजं निजम् ।

चन्द्रहाससुरां मद्यो राज्ञिपीतां ततोऽवमत् ॥१०५॥
धिगमुं शौधुपं ब्रह्मबन्धुं बन्धवधोचितम् ।
सर्वैरित्याक्रुश्यमानो निर्ययौ सद्मनोऽथ सः ॥१०६॥
ब्राह्मणा याचितास्तेन प्रायश्चित्तमचीकथन् ।
तापितत्रपुणः पानं सुरापानाघघातकम् ॥१०७॥
मूषया तापितमथ पपौ वररुचिस्त्रपु ।
प्राणैश्च मुमुचे सद्यस्तद्दाहभयादिव ॥१०८॥
स्थूलभद्रोऽपि सम्भूतविजयाचार्यसंनिधौ ।
प्रव्रज्यां पालयामास पारदृश्वा श्रुताम्बुधेः ॥१०९॥
वर्षाकालेऽन्यदायाते सम्भूतविजयं गुरुम् ।
प्रणम्य मूर्ध्ना मुनय इत्यगृह्णन्नभिग्रहान् ॥११०॥
अहं सिंहगुहाद्वारे कृतोत्सर्ग उपोषितः ।
अवस्थास्ये चतुर्मासीमेकः प्रत्यशृणोदिदम् ॥१११॥
दृग्विषाहिबिलद्वारे चतुर्मासीमुपोषितः ।
स्थास्यामि कायोत्सर्गेण द्वितीयोऽभ्यधादिदम् ॥११२॥
उत्सर्गी कूपमण्डूकासने मासचतुष्टयम् ।
स्थास्याम्युपोषित इति तृतीयः प्रत्यपद्यत ॥११३॥
योग्यान्मत्वा गुरुः साधूंस्तांस्तानन्वमन्यत ।
स्थूलभद्रः पुरोभूय नत्वैवं तावदब्रवीत् ॥११४॥
कोशाभिधाया वेश्याया गृहे या चित्रशालिका ।
विचित्रकामशास्त्रोक्तकरणालेख्यशालिनी ॥११५॥

---

109 a A संभूति° ।

अत्र कृततपःकर्मविशेषः षड्रसाशनः ।
स्थास्यामि चतुरो मासानिति मेऽभिग्रहः प्रभो ॥११६॥ युग्मं ॥
ज्ञात्वोपयोगाद्योग्यं तं गुरुस्तत्राप्यमन्यत ।
साधवश्च ययुः सर्वे स्वं स्वं स्थानं प्रतिश्रुतम् ॥११७॥
मासांस्तीव्रतपोनिष्ठान्दृष्ट्वा तान्मुनिसत्तमान् ।
यथो ऽमी भेजिरे शान्तिं सिंहसर्पारघट्टकाः ॥११८॥
स्थूलभद्रो ऽपि सम्प्राप कोशावेश्मनिकेतनम् ।
अभ्युत्तस्थौ तथा कोशाप्याहिताञ्जलिरग्रतः ॥११९॥
सुकुमारः प्रकृत्यासौ रम्भास्तम्भ इवोरुणा ।
व्रतभारेण विधुरो ऽनागादिति विचिन्त्य सा ॥१२०॥
उवाच स्वागतं स्वामिन्समादिश करोमि किम् ।
वपुर्धनं परिजनः सर्वमेतत्तवैव हि ॥१२१॥
चतुर्मासीं वसत्यै मे चित्रशालेयमर्प्यताम् ।
इत्यूचे स्थूलभद्रो ऽपि सा तूचे गृह्यतामिति ॥१२२॥
तया च तस्यां प्रगुणीकृतायां भगवानपि ।
कामस्थाने ऽविशद्दुर्ग इव स्वबलवत्तया ॥१२३॥
अथ सा षड्रसाहारभोजनानन्तरं मुनेः ।
विशेषकृतशृङ्गारा क्षोभाय समुपाययौ ॥१२४॥
सोपविष्टा पुरस्तस्योत्कृष्टा काचिदिवाप्सराः ।
चतुरं रचयामास हावभावादिकं मुहुः ॥१२५॥
करणानुभक्रीडोद्दामानि सुरतानि च ।

---

122 a B °मासी° ।

तानि तानि प्राक्तनानि स्मारयामास सासकृत् ॥१२६॥
यद्यत्क्षोभाय विदधे तया तत्र महामुनौ ।
तत्तन्मुधाभवद्वज्रे यथा नखविलेखनम् ॥१२७॥
प्रतिवासरमप्येवं तत्क्षोभाय चकार सा ।
जगाम स तु न क्षोभं मनागपि महामनाः ॥१२८॥
तथोपसर्गकारिण्या प्रत्युतास्य महामुनेः ।
अदीप्यत ध्यानवह्निर्मेघवह्निरिवाम्भसा ॥१२९॥
त्वयि पूर्वमिवाज्ञानाद्रन्तुकामां धिगीश माम् ।
आत्मानमिति निन्दन्ती सापतत्तस्य पादयोः ॥१३०॥
मुनेस्तस्येन्द्रियजयप्रकर्षेण चमत्कृता ।
प्रपेदे श्रावकत्वं सा गृह्णौ चैवमभिग्रहम् ॥१३१॥
तुष्टः कदापि कस्मैचिद्ददाति यदि मां नृपः ।
विना पुमांसमेकं तमन्यत्र नियमो मम ॥१३२॥
गते [illegible] वर्षासमये ते त्रयो ऽपि हि साधवः ।
निर्व्यूढाभिग्रहा एयुर्गुरुपादान्तिकं क्रमात् ॥१३३॥
आयान्सिंहगुहासाधुरहो दुष्करकारक ।
तत्र स्वागतमित्यूचे किंचिदुत्थाय सूरिणा ॥१३४॥
सूरिणा भाषितौ तद्वदायान्तावितरावपि ।
समे प्रतिज्ञानिर्वाहे समा हि स्वामिसत्क्रिया ॥१३५॥
स्थूलभद्रमथायान्तमभ्युत्थायाब्रवीद्गुरुः ।
दुष्करदुष्करकारिन्महात्मन् स्वागतं तव ॥१३६॥

---

0 c C •भिष । 133 d A B रंयगु॰ । 136 a A •मथायाम•, c दुष्करकार ।

सासूयाः साधवस्ते ऽथाचिन्तयन्नित्यहो गुरोः ।
इदमामन्त्रणं मन्त्रिपुत्रताहेतुकं खलु ॥१३७॥
यद्यसौ षड्रसाहारात्कृतदुष्करदुष्करः ।
इदं वर्षान्तरे तर्हि प्रतिज्ञास्यामहे वयम् ॥१३८॥
एवं मनसि संस्थाप्य सामर्षास्ते महर्षयः ।
कुर्वाणाः संयमं मासानष्टावगमयन्क्रमात् ॥१३९॥
उत्तमर्ण इव प्राप्ते काले ऽस्थुः पुरो गुरोः ।
साधुः सिंहगुहावासी चकारेति प्रतिश्रवम् ॥१४०॥
कोशावेश्मगृहे नित्यं षड्रसाहारभोजनः ।
भगवन्नवस्थास्ये चतुर्मासीमिमामहम् ॥१४१॥
स्थूलभद्रेण मात्सर्यादेतदङ्गीकरोत्ययम् ।
विचार्येत्युपयोगेन ज्ञात्वा च गुरुरादिशत् ॥१४२॥
वत्स माभिग्रहं कार्षीरिति दुष्करदुष्करम् ।
स्थूलभद्रः समः कर्तुमद्रिराज इव स्थिरः ॥१४३॥
न हि मे दुष्करो ऽप्येष कथं दुष्करदुष्करः ।
तदवश्यं करिष्यामीत्युवाच स पुनर्गुरुम् ॥१४४॥
गुरुरूचे ऽमुना भावी भ्रंशः प्राक्तपसो ऽपि ते ।
आरोपितो ऽतिभारो हि गात्रभङ्गाय जायते ॥१४५॥
गुरोर्वचो ऽवमत्याथ वीरम्मन्यो मुनिः स तु ।
उन्मीनकेतनं प्राप कोशायास्तन्निकेतनम् ॥१४६॥
स्थूलभद्रस्पर्धयैवायाति मन्ये तपस्व्यसौ ।

145 a C निभारो ।

भवे पतन् रक्षणीय इत्युत्थाय ननाम सा ॥१४७॥
वसत्यै याचितां तेन मुनिना चित्रशालिकाम् ।
कोशा समर्पयामास स मुनिस्तत्र चाविशत् ॥१४८॥
तं भुक्तषड्रसाहारं मध्याह्ने तु परीक्षितुम् ।
कोशापि तत्र लावण्यकोशभृता समाययौ ॥१४९॥
चुक्षोभ स पुनर्मङ्क्षु पङ्कजाक्षीमुदीक्ष्य ताम् ।
स्त्री तादृग्भोजनं तादृग्विकाराय न किं भवेत् ॥१५०॥
स्मरार्तो याचमानं तं कोशाप्येवमवोचत ।
वयं हि भगवन्वेश्या वेश्याः स्मो धनदानतः ॥१५१॥
व्याहार्षीन्मुनिरप्येवं प्रसीद मृगलोचने ।
अस्मासु भवति द्रव्यं किं तैलं वालुकास्विव ॥१५२॥
नेपालभूपो ऽपूर्वेभ्यो साधवे रत्नकम्बलम् ।
दत्ते तमानयेत्यूचे सा निर्वेदयितुं मुनिम् ॥१५३॥
ततश्चचाल नेपालं प्रावृट्काले ऽपि बालवत् ।
पङ्किलायामिलायां स निजमन इव स्खलन् ॥१५४॥
तत्र गत्वा महीपालाद्रत्नकम्बलमाप्य च ।
स मुनिर्वलितो वर्त्मन्यामन्त्राश्रित्य दस्युभिः ॥१५५॥
आयाति लक्षमित्याख्यद्दस्यूनां शकुनिस्ततः ।
किमायातीत्यपृच्छच्च दस्युराड् दर्शितं नरम् ॥१५६॥
आगच्छन्भिक्षुरेको ऽस्ति न कश्चित्तादृशो ऽपरः ।
इत्यगमद्द्रुमाच्छन्नदर्शी सेनापतेः स तु ॥१५७॥

---

147 c C भवे नवन् । 150 a C स्त्रु ।

साधुस्तथाथ सम्प्राप्तस्तैर्विहस्य निरूपितः ।
किमप्यर्थमपश्यद्भिर्मुमुचे च मलिम्लुचैः ॥१५८॥
एतत्सत्त्वं प्रयातीति व्याहरच्छकुनिः पुनः ।
मुनिं चौरपतिः प्रोचे सत्यं ब्रूहि किमस्ति ते ॥१५९॥
वेश्याकृते ऽस्य वंशस्यान्तः क्षिप्तो रत्नकम्बलः ।
अस्तीत्युक्ते मुनिश्चौरराजेन मुमुचे च सः ॥१६०॥
स समागत्य कोशायै प्रददौ रत्नकम्बलम् ।
चिक्षेप सा गृहस्रोतःपङ्के निःशङ्कमेव तम् ॥१६१॥
अजल्पन्मुनिरप्येवमक्षेप्यशुचिकर्दमे ।
महामूल्यो ह्यसौ रत्नकम्बलः कम्बुकण्ठि किम् ॥१६२॥
अथ कोशाप्युवाचैवं कम्बलं मूढ शोचसि ।
गुणरत्नमयं श्वभ्रे पतन्तं स्वं न शोचसि ॥१६३॥
तच्छ्रुत्वा जातसंवेगो मुनिस्तामित्यवोचत ।
बोधितो ऽस्मि त्वया साधु संसारात्साधु रक्षितः ॥१६४॥
अथान्यतीचारभवान्युन्मूलयितुमात्मनः ।
यास्यामि गुरुपादान्ते धर्मलाभस्तवानघे ॥१६५॥
कोशापि तमुवाचैवं मिथ्या मे दुष्कृतं त्वयि ।
ब्रह्मव्रतस्थयाप्येवं मया यदसि खेदितः ॥१६६॥
आशातनेयं युष्माकं बोधहेतोर्मया कृता ।
क्षन्तव्या सा गुरुस्तच्च श्रयध्वं यात सत्वरम् ॥१६७॥
इच्छामीति वदन् गत्वा सम्भूतविजयान्तिके ।

161 c D स्रोतः, A स्रोत-, B सेति । 163 c C स्वभ्रे, A श्वभे, B श्वभे ।

गृहीत्वालोचनां तीव्रमाचचार पुनस्तपः ॥१६८॥
समाधिमन्तो मरणं साधयित्वा परेद्यवि।
सम्भूतविजयाचार्यपादाः स्वर्गं प्रपेदिरे॥१६९॥
राज्ञा प्रदत्ता कोशापि तुष्टेन रथिने ऽन्यदा।
राजाज्ञयेति शिश्राय विना रागेण सा तु तम् ॥१७०॥
स्थूलभद्रं विना नान्यः पुमान्को ऽपीत्यहर्निशम्।
सा तस्य रथिनो ऽभ्यर्णे वर्णयामास वर्णिनी ॥१७१॥
रथी गत्वा गृहोद्याने पर्यङ्के च निषद्य सः।
*तन्मनोरञ्जनायेति स्वविज्ञानमदर्शयत्*॥१७२॥
माकन्दलुम्बीं बाणेन विव्याध तमपीषुणा।
पुङ्खे ऽन्येन तमप्यन्येनेत्याहस्तं शरान्प्रभृत् ॥१७३॥
वृन्तं छित्त्वा क्षुरप्रेण बाणश्रेणिमुखस्थिताम्।
लुम्बीं स्वपाणिनाकृष्यासीनस्तस्यै समर्पयत्॥१७४॥
इदानीं मम विज्ञानं पश्येत्यालप्य सापि हि।
व्यधत्त सार्षपं राशिं तस्योपरि ननर्त च ॥१७५॥
सूचीं क्षिप्त्वा तत्र राशौ पुष्पपत्रैः पिधाय ताम्।
सा ननर्त च नो सूच्या विद्धा राशिश्च न चलः ॥१७६॥
ततः स ऊचे तुष्टो ऽस्मि दुष्करेणामुना तव।
याचस्व यन्ममायत्तं ददामि तदहं ध्रुवम् ॥१७७॥
सोवाच किं मयाकारि दुष्करं येन रञ्जितः।
इदमप्यधिकं नाभ्यासान्किमभ्यासेन दुष्करम्॥१७८॥

---

169 a MSS समाधिर्वेदो। 173 c A D रदमम०।

किं चायलुम्बीकेदो ऽयं नूनं चेदं न दुष्करम् ।
अग्निचितं स्थूलभद्रो यचक्रे तत्तु दुष्करम् ॥१७८॥
अभुक्त द्वादशाब्दानि भोगान्यच समं मया ।
तचैव चित्रशालायामस्थात्सो ऽखण्डितव्रतः ॥१८०॥
दुग्धं नकुलसञ्चारादिव स्त्रीणां प्रचारतः ।
योगिनां दुष्यते चेतः स्थूलभद्रमुनिं विना ॥१८१॥
दिनमेकमपि स्थातुं को ऽलं स्त्रीसन्निधौ तथा ।
चतुर्मासीं यथातिष्ठत्स्थूलभद्रो ऽचलव्रतः ॥१८२॥
आहारः षड्रसश्चित्रशालावासो ऽङ्गनान्तिके ।
प्रत्येकं व्रतलोपायान्यस्य लोहतनोरपि ॥१८३॥
विलीयन्ते धातुमयाः पार्श्वे वह्नेरिव स्त्रियाः ।
स तु वज्रमयो मन्ये स्थूलभद्रमहामुनिः ॥१८४॥
स्थूलभद्रं महासत्त्वं कृतदुष्करदुष्करम् ।
व्यावर्ण्य शुका मुद्रेव मुखे वर्णयितुं परम् ॥१८५॥
रथिको ऽप्यथ पप्रच्छ य एव वर्ण्यते त्वया ।
को नाम स्थूलभद्रो ऽयं महासत्त्वशिरोमणिः ॥१८६॥
साप्यूचे शकटालस्य नन्दभूपालमन्त्रिणः ।
तनयः स्थूलभद्रो ऽयं तवाग्रे वर्णयामि यम् ॥१८७॥
तच्छ्रुत्वा सो ऽपि सम्भ्रान्त इत्युवाच कृताञ्जलिः ।
एषो ऽस्मि किङ्करस्तस्य स्थूलभद्रमहामुनेः ॥१८८॥
संविग्नं साथ तं ज्ञात्वा विदधे धर्मदेशनाम् ।

---

183 a. A C चाहार°, d A D लोह । 187 d C तवैषाग्यहं ।

प्रत्यबुध्यत सद्बुद्धिर्मोहनिद्रामपास्य सः ॥१८९॥
प्रतिबुद्धं च तं बुद्ध्वा साख्यन्निजमभिग्रहम् ।
तच्छ्रुत्वा विस्मयोत्फुल्ललोचनः सो ऽब्रवीदिदम् ॥१९०॥
बोधितो ऽहं त्वया भद्रे स्थूलभद्रगुणोक्तिभिः ।
यास्यामि तस्य पल्यानं भवत्यैवाद्य दर्शितम् ॥१९१॥
कल्याणमस्तु ते भद्रे पालय स्वमभिग्रहम् ।
उक्त्वैवं सद्गुरोः पार्श्वे गत्वा दीक्षां स आददे ॥१९२॥
भगवान्स्थूलभद्रो ऽपि तीव्रं व्रतमपालयत् ।
द्वादशाब्दप्रमाणश्च दुष्कालः समभूत्तदा ॥१९३॥
इतश्च गोल्लविषये ग्रामे चणकनामनि ।
ब्राह्मणो ऽभूच्चणी नाम तद्भार्या च चणेश्वरी ॥१९४॥
बभूव जन्मप्रभृति श्रावकश्च चणी चणी ।
ज्ञानिनो जैनमुनयः पर्यवात्सुश्च तद्गृहे ॥१९५॥
अन्यदा सह दन्तैश्चणेश्वर्यां सुतो ऽजनि ।
जातं च तेभ्यः साधुभ्यस्तं नतो ऽकारयच्चणी ॥१९६॥
तं जातदन्तं जातं च मुनिभ्यो ऽकथयच्चणी ।
ज्ञानिनो मुनयो ऽप्याख्यन्भावी राजैष बालकः ॥१९७॥
राज्यारम्भेण सम्पुष्टो मा भून्नरकभागिति ।
अघर्षयत्तस्य दन्तान्पीडामगणयंश्चणी ॥१९८॥
स मुनिभ्यस्तदप्याख्यन्मुनयो ऽप्येवमूचिरे ।
भाव्येव बिम्बान्तरितो राजा रदघर्षणात् ॥१९९॥

---

194 b D चणे।

चणी-चाणक्य इत्याख्यां ददौ तस्याङ्गजन्मनः ।
चाणक्यो ऽपि श्रावको ऽभूत्सर्वविद्याब्धिपारगः ॥२००॥
श्रमणोपासकत्वेन स सन्तोषधनः सदा ।
कुलीनब्राह्मणस्यैकामेव कन्यामुपायत ॥२०१॥
चाणक्यभार्या त्वन्येद्युर्मातृधाम जगाम सा ।
बभूव तत्र तद्भ्रातुस्तदोद्वाहमहोत्सवः ॥२०२॥
तस्मिन्महोत्सवे तस्याः स्वसारो ऽन्याः समाययुः ।
वस्त्रालङ्कारशालिन्यो महेभ्यपतिका हि ताः ॥२०३॥
नाधिरूढवाहनाः सर्वाः सर्वा दासीभिरावृताः ।
सच्छत्रचमरक्रियाः सर्वाः सर्वाः स्रग्दाममौलयः ॥२०४॥ युग्मं ॥
सर्वा दिव्याङ्गरागिण्यः सर्वास्ताम्बूलपाणयः ।
सर्वा अपि श्रियो देव्या वैक्रिया इव मूर्तयः ॥२०५॥
चाणक्यगृहिणी त्वेकवराकिर्निःस्वपाक्षि च ।
विशृङ्खलस्वल्पचरिकाभरणा जीर्णकञ्चुका ॥२०६॥
जीर्णकौसुम्भोत्तरीया ताम्बूलविकलानना ।
वपुर्मलैकसञ्जाताङ्गरागा नष्टकुण्डला ॥२०७॥
कर्मणा कर्कशकरा सदा मलिनकुन्तला ।
ताभिः श्रीमदुदूढाभिर्भगिनीभिरहस्यत ॥२०८॥
॥ त्रिभिर्विशेषकं ॥
विवाहमिलितो ऽन्यो ऽपि लोकः सर्वो जहास ताम् ।
सा तु जिह्रियती कोणप्रविष्टोद्वाहमत्यगात् ॥२०९॥

---

207 c C मलैक।

गताय चाणक्यगृहे विषादमलिनानना ।
साथान्तिलकयन्ती स्वां साञ्जनैरश्रुबिन्दुभिः ॥२१०॥
तां तु म्लानमुखीं दृष्ट्वा प्रातः कैरविणीमिव ।
तद्दुःखदुःखी चाणक्यो ऽभिदधे मधुराक्षरम् ॥२११॥
किं मत्कृतो ऽपमानस्ते प्रतिवेश्मिकृतो ऽथवा ।
पितृवेश्मकृतो यद्वा यदेवं ताम्यसि प्रिये ॥२१२॥
सा त्वाख्यातुमनीशाभूदपमानकदर्थिता ।
पत्युरत्यन्तनिर्बन्धादाख्याति स्म तथापि तत् ॥२१३॥
चाणक्यो ऽपि हि विज्ञानगृहिणीदुःखकारणः ।
द्रविणोपार्जनोपायं निरपायमचिन्तयत् ॥२१४॥
पाटलीपुत्रनगरे नन्दराजो द्विजन्मनाम् ।
विशिष्टां दक्षिणां दत्ते तदर्थं तत्र याम्यहम् ॥२१५॥
इति निश्चित्य तत्रागात्प्रविश्य च नृपौकसि ।
अग्रे दत्तेष्वासनेषु निषसादादिमासने ॥२१६॥
चाणक्येन तदाक्रान्तमासनं प्रथमं सदा ।
नन्द एव ह्यलञ्चक्रे तस्य भद्रासनं हि तत् ॥२१७॥
नन्देन च सहायातो नन्दपुत्रस्तदावदत् ।
ब्राह्मणो निषसादैव छायामाक्रम्य भूपतेः ॥२१८॥
राज्ञो दास्यैकया प्रोचे चाणक्यः सामपूर्वकम् ।
निषीदास्मिन्द्वितीयस्मिन्नासने त्वमहो द्विज ॥२१९॥

213 d C स्व for स्म, B हि । 215 b C नन्दो, A C राजा, c A विशिष्ट । 219 a C चेट्या ।

कमण्डलुर्मदीयो ऽत्र स्थास्यतीत्यभिधाय सः ।
कमण्डलुं न्यधात्तत्र सोऽरुन्धत्प्रथममासनम् ॥२२०॥
एवं तृतीयं दण्डेन चतुर्थं जपमालया ।
पञ्चमं चोपवीतेनोत्थाप्यमानो रुरोध सः ॥२२१॥
दास्यवोचदहो धृष्टो न मुञ्चत्याद्यमासनम् ।
विशेषो ऽयं यदन्यान्यप्यासनानि रुणद्ध्यसौ ॥२२२॥
तत्किमेतेन धृष्टेन वातुलेन द्विजन्मना ।
पादेनाहत्य चाणक्यमित्युत्थापयति स्म सा ॥२२३॥
चाणक्यस्तत्क्षणात्क्रुद्धो दण्डघृष्ट इवोरगः ।
पश्यतः सर्वलोकस्य प्रतिज्ञामकरोदिमाम् ॥२२४॥
सकोशभृत्यं ससुहृत्पुत्रं सबलवाहनम् ।
नन्दमुन्मूलयिष्यामि महावायुरिव द्रुमम् ॥२२५॥
आध्मातताम्रताम्रास्यो ज्वलन्नग्निरिव क्रुधा ।
नगरान्निरगान्मङ्क्षु सम्भूतेयं पणिग्रहः ॥२२६॥
धीमतां मौलिमाणिक्यं चाणक्यश्चास्मरन्किल ।
यद्बिम्बान्तरितो ऽहं हि भविष्यामि महीपतिः ॥२२७॥
स राज्यार्हं नरं कंचित्पश्याम्मीत्यभ्रमद्भुवि ।
अपमानान्नापमानं विस्मरन्त्यभिमानिनः ॥२२८॥

---

*A adds two verses before 225 :*

धम्महत्थ (read धम्मंहत्थ) रूपं नन्दमखव्वगव्वपव्वतं ।
फुडिस्सति जिया (read जिव्हा) नैया कामरसचिरिव द्विपरे ॥
इन्थं मक्षापरज्ञं कुणमाणो चो मम्मे मदेकव्वं ।
कं रोयद मं कुम्भा इव मविरमरोड़ि निच्छूढो ॥

चणेश्वरीकुक्षिजन्मा द्विजन्मा सोऽन्यदा ययौ ।
मयूरपोषका यत्रावात्सुर्नन्दमहीपतेः ॥२२९॥
मयूरपोषकग्रामे तस्मिंश्च चणिनन्दनः ।
प्राविशत्कणभिक्षार्थी परिव्राजकवेषभृत् ॥२३०॥
मयूरपोषकमहत्तरस्य दुहितुस्तदा ।
अभूदापन्नसत्त्वायाश्चन्द्रपानाय दोहदः ॥२३१॥
तत्कुटुम्बेन कथितश्चाणक्याय स दोहदः ।
पूरणीयः कथमसाविति पृष्टोऽवदच्च सः ॥२३२॥
यद्येतस्या जातमात्रं दारकं मम दत्थ भोः ।
तदाहं पूरयाम्येव शशभृत्पानदोहदम् ॥२३३॥
अपूर्णे दोहदे गर्भनाशोऽस्या मा भवत्विति ।
तन्मातापितरौ तत्प्रामंसातां वचनं हि तत् ॥२३४॥
चाणक्योऽकारयच्चाथ सच्छिद्रं तृणमण्डपम् ।
पिधानधारिणं गुप्तं तदूर्ध्वं चामुचन्नरम् ॥२३५॥
तस्याधोऽकारयामास स्थालं च पयसा भृतम् ।
ऊर्जराकानिशीथे च तत्रेन्दुः प्रत्यबिम्ब्यत ॥२३६॥
गुर्विण्यास्तत्र सङ्क्रान्तं पूर्णेन्दुं तमदर्शयत् ।
पिबेत्युक्ता च सा पातुमारेभे विकसन्मुखी ॥२३७॥
सापाद्यथा यथा गुप्तपुरुषेण तथा तथा ।
पिधीयत पिधानेन तच्छिद्रं तार्णमण्डपम् ॥२३८॥

233 b MSS दत्त । 236 a A पूर्णराका, d C ॰बिम्बत, B pr. manu
238 a C सागाद्य॰ ।

कमण्डलुर्मदीयोऽत्र स्थास्यतीत्यभिधाय सः ।
कमण्डलुं न्यधात्तत्र नोत्थाप्यप्रथमासनम् ॥२२०॥
एवं तृतीयं दण्डेन चतुर्थं जपमालया ।
पञ्चमं चोपवीतेनोत्थाप्यमानो रुरोध सः ॥२२१॥
दास्येवोचदहो धृष्टो न मुञ्चत्यग्रमासनम् ।
विशेषोऽयं यदन्यान्यप्यासनानि रुणद्ध्यसौ ॥२२२॥
तत्किमेतेन धृष्टेन वातुलेन द्विजन्मना ।
पादेनाहत्य चाणक्यमित्युत्थापयति स्म सा ॥२२३॥
चाणक्यस्तत्क्षणाद्रुष्टो दण्डघृष्ट इवोरगः ।
पश्यतः सर्वलोकस्य प्रतिज्ञामकरोदिमाम् ॥२२४॥
सक्रोधस्त्वं ससुहृत्पुत्रं सबलवाहनम् ।
नन्दमुन्मूलयिष्यामि महावायुरिव द्रुमम् ॥२२५॥
आघातताम्रताम्राक्षो ज्वलन्नग्निरिव क्रुधा ।
नगरान्निरगान्मङ्क्षु सभ्रूक्षेपं चणिप्रसूः ॥२२६॥
धीमतां मौलिमाणिक्यं चाणक्यस्यास्मरन्किल ।
यद्विप्रान्तरितोऽहं हि भविष्यामि महीपतिः ॥२२७॥
स राज्यार्हं नरं कंचित्पश्यामीत्यभ्रमद्भुवि ।
अपमानान्नापमानं विस्मरन्त्यभिमानिनः ॥२२८॥

---

A adds two verses before 225:

चसंहृत्य (read चासंहृत्य) दर्पं नन्दमसर्वगर्वपर्वतं ।
छुटिष्यति शिषा (read शिखा) नैषा कालरात्रिरिव द्विषां ॥
इत्थं महापरम्यं कृषमाणो यो मनो महेश्वरं ।
कं रोषदं कुत्वा इव मखिरनरैरपि निष्कूटो ॥

डिम्भकाः कथयामासुः परिव्राजकपुत्रकः ।
असौ मातोदरस्थो ऽपि परिव्राजकसात्कृतः ॥२५०॥
चाणक्यो ऽपि स्वयं लब्धं तं ज्ञात्वोवाच बालकम् ।
स एषो ऽस्मि यदीयस्त्वमेहि राज्यं ददामि ते ॥२५१॥
राज्यार्थी चन्द्रगुप्तो ऽपि लगति स्म तदङ्गुलौ ।
चाणक्यो ऽपि तमादाय द्राक् पलायिष्ट दस्युवत् ॥२५२॥
धातुवादोपार्जितेन द्रविणेन चणिप्रसूः ।
चक्रे पत्त्यादिसामग्रीं नन्दमुच्छेत्तुमुद्यतः ॥२५३॥
ततः सर्वाभिसारेण तया पत्त्यादिसेनया ।
पाटलीपुत्रनगरं चतुर्दिशमवेष्टयत् ॥२५४॥
तदल्पसारं चाणक्यशिबिरं नन्दभूपतिः ।
निर्गत्य कुट्टयामास सर्वमाजकलीलया ॥२५५॥
सचन्द्रगुप्तश्चाणक्यः समयज्ञः पलायत ।
नष्ट्वापि रक्षेदात्मानं सत्यात्मनि पुनः श्रियः ॥२५६॥
चन्द्रगुप्तं ग्रहीतुं च नन्दो ऽपि वरसादिनः ।
आदिशत्त महान्तो हि राजानो राज्यकाङ्क्षिणम् ॥२५७॥
जितकाशिनि नन्दे च पुनर्नगरमीयुषि ।
नागरैरुत्सवश्चक्रे ऽनुरूपः स्वस्वसम्पदाम् ॥२५८॥
तेषां च सादिनामेकः साश्वेन तरस्विना ।
अदवीयसि देशे ऽगाच्चन्द्रगुप्तस्य गच्छतः ॥२५९॥
चाणक्यो ऽपि तमायान्तं दूरादालोक्य सादिनम् ।

---

241 d and 253 a MSS धानुवाद॰। 255 d D ॰साजक। 256 c MSS नंष्ट्वा।

पूरिते दोहदे चैवं समये ऽसूत सा सुतम् ।
चन्द्रगुप्ताभिधानेन पितृभ्यां सो ऽभ्यधीयत ॥२३९॥
चन्द्रवच्चन्द्रगुप्तो ऽपि व्यवर्धत दिने दिने ।
मयूरपोषककुलोत्पलिनीवनलासकः ॥२४०॥
सुवर्णोपार्जनधिया चाणक्यो ऽपि परिभ्रमन् ।
गवेषयितुमारेभे धातुवादविशारदान् ॥२४१॥
इतश्च चन्द्रगुप्तो ऽर्भै रममाणो दिने दिने ।
विलेभे भूपतिरिव तेभ्यो ग्रामादिकं सदा ॥२४२॥
हस्तीकृत्य हयीकृत्य चारुरोह स बालकाम् ।
प्रायो हि भाविनी लक्ष्मीरिङ्गितैरपि सूच्यते ॥२४३॥
क्रमयोगेन चाणक्यस्तत्रैवागात्परिभ्रमन् ।
चन्द्रगुप्तं तथाचेष्टं दृष्ट्वा चातिविसिस्मिये ॥२४४॥
चाणक्यस्तत्परीक्षार्थमेवमाभाषते स्म तम् ।
हे राजन्मह्यमपि हि किंचनापि प्रदीयताम् ॥२४५॥
जगाद चन्द्रगुप्तो ऽपि ब्रह्मन् ग्रामगवीरिमाः ।
यथारुचि गृहाण त्वं मद्दत्ताः को निषेत्स्यति ॥२४६॥
स्मित्वा प्रोवाच चाणक्यः कथं गृह्णामि गा इमाः ।
गोस्वामिभ्यो बिभेम्युच्चैर्मारयिष्यन्ति ते हि माम् ॥२४७॥
प्रोवाच चन्द्रगुप्तो ऽपि मा भैषीर्ननु ते मया ।
गावः प्रदत्ता गृह्णन्तो वीरभोग्या वसुन्धरा ॥२४८॥
चाणक्यो ऽचिन्तयदसावहो विज्ञानवानपि ।
अतः पप्रच्छ को ऽसावित्यर्भकांस्तत्समीपगान् ॥२४९॥

त्वामाख्यं सादिने यर्हि तर्हि किं चिन्तितं त्वया ॥२७०॥
चन्द्रगुप्तो ऽब्रवीदार्य मयैतच्चिन्तितं तदा ।
इदमेव खलु श्रेयो जानात्यार्यो हि न त्वहम् ॥२७१॥
चाणक्यो ऽचिन्तयन्नूनं सर्वदापि वशंवदः ।
न हि मे व्यभिचार्येष यन्तुर्भद्र इव द्विपः ॥२७२॥
तयोश्च गच्छतोः पृष्ठे यमदूत इवोद्भटः ।
आययौ नन्दसाद्यन्यो वायुवाजेन वाजिना ॥२७३॥
तमापतन्तं दृष्ट्वा च चाणक्येनोदितः पुनः ।
चन्द्रगुप्तः सरोमध्ये न्यमाङ्क्षीन्मङ्क्षु हंसवत् ॥२७४॥
रजकं वारितीरस्थं चणिसूनुरुवाच च ।
त्वच्छ्रेणिकुपितो राजा नश्य चेन्न मुमूर्षसि ॥२७५॥
रजको ऽप्यश्ववारं तं दृष्ट्वा दूरादुदायुधम् ।
सत्यमेवेति निश्चित्य पलायिष्टात्तजीवितः ॥२७६॥
हस्तौघालनैर्वस्त्रक्षालने ऽपि कृतश्रमः ।
तद्वस्त्राणि तु निर्णेक्तुमारेभे चणिसूः स्वयम् ॥२७७॥
तं च सादिनमायान्तं पृच्छन्तं पूर्वसादिवत् ।
तथैव मारयामास चणिपुत्रः कुशाग्रधीः ॥२७८॥
चाणक्यचन्द्रगुप्तौ तु ततः स्थानात्प्रचेलतुः ।
चिखिदे चन्द्रगुप्तः क्षामकुक्षिर्बुभुक्षया ॥२७९॥
चन्द्रगुप्तं बहिर्मुक्त्वा चाणक्यो ग्रामसम्मुखम् ।
चचाल भक्तमानेतुं भक्तं ग्रामं विना न हि ॥२८०॥

---

275 c C °चे, d C नश्यस्व ।

प्रत्युत्पन्नमतिश्चन्द्रगुप्तायैवं समादिशत्॥२६०॥
सरसः पद्मिनीषण्डमण्डितस्यास्य वारिणि।
स्नातिलीलायितं कृत्वा मज्जोन्मज्जेश्च मङ्क्षिरा ॥२६१॥
ममज्ज चन्द्रगुप्तो ऽथ द्रागगाधे ऽपि वारिणि।
धीरो वारिस्तम्भनिकां विद्यां साधितवानिव ॥२६२॥
स्वयं तु सरसस्तीरे चाणक्यः सुस्थिरासनः।
समाधिनाटनं कृत्वा तस्थौ योगीव निर्ममः ॥२६३॥
क्ष्मातोद्यकोणाघाताभपादपातेन वाजिना।
वायुवाजेन नन्दाश्ववारो ऽथ स समाययौ ॥२६४॥
स पप्रच्छ च चाणक्यं भदन्त कथयाशु मे।
किं त्वयाद्य पुमान्को ऽपि दृष्टो ऽभिनवयौवनः॥२६५॥
समाधिभङ्गभीरुत्वाभिनयेन चणिप्रसूः।
अङ्गुलीसञ्ज्ञया तस्य ऊंकुर्वन्नार्यदर्शयत् ॥२६६॥
चन्द्रगुप्ताकर्षणाय स सादी मङ्क्षुमम्भसि।
आमुक्तं मोक्तुमारेभे चलनीमिव नर्तकी ॥२६७॥
तस्यैवादाय निस्त्रिंशं निस्त्रिंशश्चणिभूरथ।
अम्बुदेव्या बलीकर्तुमिव चिच्छेद तच्छिरः॥२६८॥
एहि वत्सेहि वत्सेति चाणक्येनोदिते क्षणात्।
सरसो निर्ययौ चन्द्रगुप्तश्चन्द्र इवोदधेः ॥२६९॥
चन्द्रमारोप्य तत्राश्वे चाणक्यः समभाषत।

---

261 c C B स्नाति°, A स्नाहि, D स्नाति pr. m. A मज्जोन्मज्जेति।
263 c A °नाटकं।

त्वामाख्यं सादिने यर्हि तर्हि किं चिन्तितं त्वया ॥२७०॥
चन्द्रगुप्तो ऽब्रवीदार्य मयैतच्चिन्तितं तदा ।
इदमेव खलु श्रेयो जानात्यार्यो हि न त्वहम् ॥२७१॥
चाणक्यो ऽचिन्तयन्नूनं सर्वदापि वशंवदः ।
न हि मे व्यभिचार्येष यन्तुर्भद्र इव द्विपः ॥२७२॥
तयोश्च गच्छतोः पृष्ठे यमदूत इवोद्भटः ।
आययौ नन्दसाद्यन्यो वायुवाजेन वाजिना ॥२७३॥
तमापतन्तं दृष्ट्वा च चाणक्येनोदितः पुनः ।
चन्द्रगुप्तः सरोमध्ये न्यमङ्क्षीत्कङ्कहंसवत् ॥२७४॥
रजकं वारितीरस्थं चणिसूनुरुवाच च ।
त्वच्छ्रेणिरुषितो राजा नश्य चेन्न मुमूर्षसि ॥२७५॥
रजको ऽप्यश्ववारं तं दृष्ट्वा दूरादुदायुधम् ।
सत्यमेवेति निश्चित्य पलायिष्टात्तजीवितः ॥२७६॥
वृत्तीचालनैर्वस्त्रचालने ऽपि कृतश्रमः ।
तद्वस्त्राणि तु निर्नेक्तुमारेभे चणिसूः स्वयम् ॥२७७॥
तं च सादिनमायान्तं पृच्छन्तं पूर्वसादिवत् ।
तथैव मारयामास चणिपुत्रः कुशाग्रधीः ॥२७८॥
चाणक्यचन्द्रगुप्तौ तु ततः स्थानात्प्रचेलतुः ।
चिखिदे चन्द्रगुप्तो यान्क्षामकुक्षिर्बुभुक्षया ॥२७९॥
चन्द्रगुप्तं बहिर्मुक्त्वा चाणक्यो ग्राममभ्यगम् ।
चचाल भक्तमानेतुं भक्तं ग्रामं विना न हि ॥२८०॥

---

275 c C •च्चे, d C नश्यचेव ।

ग्रामाद्भट्टं च निर्यान्तं तत्कालकृतभोजनम्।
मन्दमन्दपदं तुन्दपरिमार्जं ददर्श सः ॥२८१॥
पप्रच्छ चेह विप्रस्य पालिर्लगति वा न वा।
भट्टो ऽप्याख्यन्नगल्येव लग्ना मम हि सम्प्रति ॥२८२॥
पुनः पप्रच्छ चाणक्यो बुभुजे भट्ट किं त्वया।
स आख्यत्स्मरघद्मा कृतशालिकरम्बकम् ॥२८३॥
चाणक्यो ऽचिन्तयद्ग्रामे भक्तार्थं भ्रमतो मम।
विलम्बः स्यात्कथं भावी चन्द्रगुप्तस्तु मां विना ॥२८४॥
एकाकी खलु नन्दाश्ववारैर्दुर्वारविक्रमैः।
कुक्कुरैः शूकर इव चन्द्रगुप्तो ग्रहीष्यते ॥२८५॥
कुमारश्चन्द्रगुप्तश्च गृहीतो नन्दसादिभिः।
तदा मनोरथो भावी स्वप्नराज्यसमो मम ॥२८६॥
उदरादस्य भट्टस्य तदाकृष्य करम्बकम्।
ददामि तस्मै तत्प्राणा रक्षणीया यथा तथा ॥२८७॥
इति भट्टस्य चाणक्यस्तस्योदरमदारयत्।
सद्यो रसवतीकार इव कूश्माण्डिकाफलम् ॥२८८॥
चाणक्यस्तत्क्षणं भट्टजठरात् पिठरादिव।
स्वयं करम्बमाकृष्य चन्द्रगुप्तमभोजयत् ॥२८९॥
सचन्द्रगुप्तश्चाणक्यस्ततो भ्राम्यन्दिनात्यये।
आससाद ग्राममेकं कुलायमिव विष्किरः ॥२९०॥
तदा प्रविष्टो भिक्षार्थं ग्रामे तस्मिन्परिभ्रमन्।

283 c A ■ घस्तरद्मा D घस्र।

चाणक्यो रोरद्रूपाया ययौ कस्याश्चिदोकसि ॥२९१॥
बालकानां तदा चोष्णा रब्बाभूत्परिवेषिता ।
तत्रैको बालकः पाणिं चिक्षेपातिबुभुक्षितः ॥२९२॥
दग्धाङ्गुलीकं तं बालं रुदन्तं स्थविरावदत् ।
न किंचिदपि जानासि चाणक्य इव बालकः ॥२९३॥
चाणक्यस्तद्वचः श्रुत्वा प्रविश्य च तदोकसि ।
पप्रच्छ वृद्धां चाणक्यदृष्टान्तः को ऽयमर्भके ॥२९४॥
जरत्युवाच चाणक्यो बहिर्दुर्गमसाधयन् ।
आदौ नन्दपुरं रुन्धन्विगोपं प्रापदल्पधीः ॥२९५॥
शनैः पार्श्वेष्वभुञ्जानो मध्य एव क्षिपन्करम् ।
तथा बालो ऽप्ययं दग्धो ऽङ्गुलीष्वप्युष्णरब्बया ॥२९६॥
अहो स्त्रिया अप्येतस्या धीमत्त्वमिति चिन्तयन् ।
चाणक्यो हिमवत्कूटं ततो ऽगात्स्निविवेशनम् ॥२९७॥
तत्र पर्वतकाख्येन नृपेण सह सौहृदम् ।
चन्द्रगुप्तगुरुश्चक्रे नन्दोच्छेदककाम्यया ॥२९८॥
तमन्यदोचे चाणक्यो नन्दमुन्मूल्य पार्थिवम् ।
तद्राज्यं संविभक्ष्यावो ऽशौव भ्रामराविव ॥२९९॥
ततः पर्वतकेनापि प्रत्यपद्यत तद्वचः ।
स हि चाणक्यसंयुक्तो ऽभूत्सन्नद्ध इव केसरी ॥३००॥

---

291 b A चोररूपा, B चोर॰ ॰रूपा, D चोररूपया। 296 d A रब्बया, B रब्बया D रब्बया।

31

चाणक्यश्चन्द्रगुप्तश्च स च पर्वतको बहिः ।
उपचक्रमिरे नन्ददेशं साधयितुं ततः ॥३०१॥
एकं तु तैः पुरं रुद्धमपि भङ्क्तुमशाकि न ।
भिक्षार्थं भिक्षुवेषेण चाणक्यस्तत्र चाविशत् ॥३०२॥
तत्र छिद्रदृष्टौ चाणक्यः पुरमध्ये परिभ्रमन् ।
ददर्शेन्द्रादिकाः सप्त सकला मातृदेवताः ॥३०३॥
चाणक्योऽचिन्तयदिमाः सकलाः पाहि देवताः ।
नूनमासां प्रभावेण पुरमेतन्न भज्यते ॥३०४॥
मातरः कथमुत्थाप्या इति यावदचिन्तयत् ।
चाणक्यः पुररोधार्तैः पौरैस्तावदपृच्छ्यत ॥३०५॥
कदा हि भगवन्नेतत्पुरमुद्वेष्टयिष्यते ।
आख्याहि जानन्ति खलु प्रायः सर्वं भवादृशाः ॥३०६॥
चन्द्रगुप्तगुरुः स्माह हंहो शृणुत नागराः ।
मातरो यावदेतास्तावदुद्वेष्टनं कुतः ॥३०७॥
द्रागथोत्पादयामासुः पौरास्तन्मातृमण्डलम् ।
किं नाम कुरुते नार्तो धूर्तवञ्चो विशेषतः ॥३०८॥
चाणक्यदत्तसङ्केतौ चन्द्रपर्वतकौ तदा ।
पलायिषातां जहृषुश्चात्यन्तं ते [illegible] नागराः ॥३०९॥
व्यावृत्य वार्धिवेलेव दुर्धरौ पुनरेव तौ ।
अचिन्तितौ विविशतुः पुरे तत्र परन्तपौ ॥३१०॥

---

303 c D ददर्श नामिदका । 304 b C सकलाप्यहि, MSS सकला, D (पाहि) marginal gloss रक्षंति, construction: Pāṇ. iii, 4, 2, cf. Çiçupâla Vadha, I, 51 and Mallinâtha's remarks on that passage.

ततश्च तत्पुरं भङ्क्त्वा तौ द्वावपि महारथौ ।
साधयामासतुर्नन्ददेशं चाणक्यसारथी ॥३११॥
चाणक्यबुद्ध्या सन्नद्धौ तौ रुद्धः स्वामितैर्बलैः ।
परितः पाटलीपुत्रनगरं गुरुविक्रमौ ॥३१२॥
क्षीणकोशः क्षीणबलः क्षीणधीः क्षीणविक्रमः ।
नन्दः पुण्यक्षयेणाभूद्यावत्पुण्यं हि ह्युदयः ॥३१३॥
चाणक्यपार्श्वे नन्दोऽथ मार्गयामास जीवितः ।
धर्मद्वारमयाचिष्ट प्रेयः कस्य न जीवितम् ॥३१४॥
अथापचष्ट चाणक्यस्त्वमेकेन रथेन भोः ।
निर्याहि तत्र चाभीष्टं यथाशक्त्यधिरोपयेः ॥३१५॥
न हि ते कोऽप्युपद्रोता रथेनैकेन गच्छतः ।
समाश्वसिहि मा भैषीर्द्विजन्मेव न हन्यसे ॥३१६॥
भार्ये द्वे कन्यकां चैकां यथाशक्ति वसूनि च ।
रथमारोप्य निरगान्नगरादथ नन्दराट् ॥३१७॥
समायान्तं चन्द्रगुप्तं दृष्ट्वा द्रागनुरागभाक् ।
रथस्था नन्ददुहिता देवीवानिमिषाक्ष्यभूत् ॥३१८॥
मुखचन्द्रमपूर्वेव कटाक्षैर्नन्दनन्दिनी ।
चन्द्रगुप्तस्य सम्भोगसत्यङ्कारमिवार्पयत् ॥३१९॥
नन्दो जगाद तां वत्से भजैनं स्वयंवरा ।
प्रायः क्षत्रियकन्यानां शस्यते हि स्वयंवरः ॥३२०॥

---

312 b A रुद्धः [illegible] । 317 a C भार्यो, A भार्येदत्त, B भार्येद् ।

आयुष्मते स्वस्ति तुभ्यं रथादुत्तर मुञ्च माम् ।
त्वत्परिणायनशल्यं मम यातु त्वया सह ॥३२१॥
एवमुक्ता तु सा तस्माद्रथादुत्तीर्य सत्वरम् ।
चान्द्रगुप्तं रथवरमारोढुमुपचक्रमे ॥३२२॥
आरोहन्त्यां तदा तस्यां चन्द्रगुप्तरथस्य तु ।
नवारका अभज्यन्त यन्त्राक्रान्तेक्षुयष्टिवत् ॥३२३॥
असावमङ्गलकरी केयमायाति मद्रथम् ।
रथादरुत्तुमिति तां चन्द्रगुप्तो न्यवारयत् ॥३२४॥
चाणक्योऽप्यवदन्नेमां चन्द्रगुप्त निवारय ।
शकुनं हि शुभायेदं मा स्म संस्थास्त्वमन्यथा ॥३२५॥
शकुनेनामुना वत्स वृद्धिमेवाधिकाधिकाम् ।
गामी पुरुषयुगानि नव यावत्तवान्वयः ॥३२६॥
ततश्च नन्दसद्मनि प्रविष्टौ चन्द्रपर्वतौ ।
आरेभाते संविभक्तुं विपुलां नन्दसम्पदम् ॥३२७॥
तत्राभूत्कन्यका चैका सर्वस्वमिव रक्षिता ।
नन्दभूपतिराजन्म तामुपाजीजिवद्विषम् ॥३२८॥
तस्यां पर्वतकस्याभूदनुरागस्तदा तथा ।
यथा तां हृदये सोऽधाद्ध्यातव्यामिव देवताम् ॥३२९॥
तां च पर्वतकायैव चन्द्रगुप्तगुरुर्ददौ ।
तदैव पाणिग्रहणमङ्गलं च प्रचक्रमे ॥३३०॥

---

330 a MSS. om. च ।

सञ्चक्राम विषं तस्यास्तदा पर्वतके ऽपि हि ।
होमाग्नितापसम्भूततत्स्वेदजलसङ्क्रमात् ॥३३१॥
सङ्क्रान्तविषवेगार्तस्तदा पर्वतको ऽभवत् ।
शिथिलीभूतसर्वाङ्गश्चन्द्रगुप्तमुवाच च ॥३३२॥
अहं पीतविष इव वक्तुमप्युत्सहे न हि ।
परित्रायस्व हे वत्स म्रियते ऽद्य न संशयः ॥३३३॥
मान्त्रिका मान्त्रिका वैद्या वैद्या इत्यनुलापिनम् ।
चाणक्यश्चन्द्रगुप्तं द्राक्कर्णे भूत्वैवमन्वशात् ॥३३४॥
विनौषधं हि ते व्याधिर्यदि यात्येष यातु तत् ।
कुरु मौनमुपेक्षस्व स्वस्ति ते स्यादमुं विना ॥३३५॥
अर्धराज्यहरं मित्रं यो न हन्यात्स हन्यते ।
इति मार्गो ऽयं स्वयं चेन्म्रियते पुण्यवानसि ॥३३६॥
अनुशिष्यैवमुचितभ्रुकुटीभङ्गसञ्ज्ञया ।
चाणक्यो वारयामास मौर्यं धुर्यो मनीषिणाम् ॥३३७॥
ततश्च हिमवत्कूटपार्थिवः प्राप पञ्चताम् ।
तच्चन्द्रगुप्तसाद्राज्यद्वयमप्यभवत्तदा ॥३३८॥
एवं च श्रीमहावीरमुक्तेर्वर्षशते गते ।
पञ्चपञ्चाशदधिके चन्द्रगुप्तो ऽभवन्नृपः ॥३३९॥

चन्द्रगुप्तस्य राज्ये [illegible] के ऽपि नन्दानुजीविनः ।
अकार्षुः पुरुषाश्चौर्यं प्रदेशे विषमे स्थिताः ॥३४०॥

---

331 a A संचक्रमे। 339 b A D वर्ष॰।

पुररक्षाक्षमं कंचिद्वीक्षमाणो ऽथ पूरुषम् ।
चाणक्यो ऽव्रजदेकस्य कौलिकस्य निकेतनम् ॥३४१॥
मत्कोटकदरीवह्निं क्षिपन्नासीत्तदा च सः ।
तं पप्रच्छ स चाणक्यः किं करोय्यथ सो ऽब्रवीत् ॥३४२॥
मत्पुत्रोपद्रवकरान्दुष्टान्मत्कोटकानमून् ।
मूलादुन्मूलयन्नस्मि दुष्टानां नान्यदर्हति ॥३४३॥
अहो धीश्रवमायाभ्यां कौलिको ऽयं प्रकृष्यते ।
चिन्तयन्निति चाणक्यश्चन्द्रगुप्तान्तिके ययौ ॥३४४॥
आज्ञाप्य कौलिकं तत्र चन्द्रगुप्ताच्चणिप्रसूः ।
कारयामास नगराध्यक्षं शिक्षाविचक्षणः ॥३४५॥
ते नन्दपुरुषाश्चौरा विविधैर्भोजनादिभिः ।
विश्वास्य जघ्निरे तेन चाणक्यस्य सुधा न धीः ॥३४६॥
इतश्च मौर्यस्य गुरुर्यस्मिन्ग्रामे पुरा किल ।
भिक्षां न प्राप्तस्तद्ग्रामानाजुहाव कुटुम्बिनः ॥३४७॥
जातकोपस्तदा तेषां क्षुद्रबुद्ध्या चणिप्रसूः ।
आम्राणां कुरुत वृतिं वंशीनामिति चादिशत् ॥३४८॥
चाणक्यस्य निदेशेन तैस्तद्ग्रामकुटुम्बिभिः ।
वंशीश्छित्त्वा वृतिश्चक्रे सहकारमहीरुहाम् ॥३४९॥
रे रे मयैतदादिष्टं वंशीनां क्रियतां वृतिः ।
आम्रैरिति वदन्मौर्यगुरुः कोपमनाटयत् ॥३५०॥

---

344 b, 345 a, 350 b, MSS. कोलि° । 348 c, 349 c, 350 b MSS. वृतिं(:) । 350 b C [illegible] ।

उत्पाद्य कृत्रिमं दोषमिमं तेषां कुटुम्बिनाम् ।
सबालवृद्धं चाणक्यो ग्राममज्वालयद्रुषा ॥३५१॥
अन्येद्युश्चन्द्रगुप्तस्य कोशो नास्तीति चिन्तया ।
दीनारैः स्थालमापूर्य चाणक्यो लोकमब्रवीत् ॥३५२॥
मया सहाक्षैर्दीव्यन्तु यो मां जेष्यति तेन हि ।
दीनारपूरितं स्थालमिदं लभ्यमसौ पणः ॥३५३॥
जेष्यामि यं पुनरहं तस्य पार्श्वादहो जनाः ।
दीनारमेकमादास्ये पाषाणे रेखेव वागियम् ॥३५४॥
ततश्च रन्तुमारेभे जनैः सह दिवानिशम् ।
चन्द्रगुप्तगुरुः कूटपाशकैस्तु जिगाय तान् ॥३५५॥
एषो ऽर्थोपार्जनोपायः सविलम्बो ऽल्पको ऽपि च ।
इत्युपायान्तरं कर्तुं पौरानाह्वास्त सो ऽखिलान् ॥३५६॥
ततश्च भोजयित्वा तानपीप्यदवारुणीम् ।
पानगोष्ठ्यां च संक्षिप्तानुपतालानवीवदत् ॥३५७॥
इत्थं नर्तनं गानमन्यच्च क्षीबचेष्टितम् ।
चाणक्यो ऽभिनयन्नूचे ऽर्थार्जनोपायपण्डितः ॥३५८॥
वल्के द्वे धातुरक्ते मे त्रिदण्डं स्वर्णकुण्डिका ।
नृपतिर्वशवर्ती च तद्वाद्यत झुम्मरीम् ॥३५९॥
ततश्च झुम्मरीवाद्ये कौलिकैर्वादिते सति ।
व्याजहार परो मत्तः करमुत्क्षिप्य नागरः ॥३६०॥
योजनं मत्तहस्त्याने यानीभस्य पदान्यहो ।
तानि स्वर्णसहस्रेण प्रत्येकं पूजयाम्यहम् ॥३६१॥ युग्मं ।

प्राग्वदादितस्तुम्बर्यामपरः कश्चिदब्रवीत् ।
तिलानामाढके ह्युप्ते प्ररूढे फलिते भृशम् ॥३६२॥
तिला भवन्ति यावन्तस्तावन्ति मम सद्मनि ।
कार्त्तस्वरसहस्राणि सन्ति सङ्ख्या न विद्यते ॥३६३॥ युग्मं ॥
प्राग्वदादितस्तुम्बर्यामन्यो ऽवादीद्घनागमे ।
प्रवहन्त्या गिरिनद्या वारिपूरेण भूयसा ॥३६४॥
घृतेनैकदिवसोत्पन्नेनापि गवामहम् ।
संवरं विरचय्योच्चैः स्खलयामि पयोरयम् ॥३६५॥ युग्मं ॥
प्राग्वदादितस्तुम्बर्यामन्यो ऽवददहं खलु ।
जात्यनवकिशोराणामेकवासरजन्मनाम् ॥३६६॥
समुद्वृत्तैः स्कन्धकेशैर्वेष्टयामि समन्ततः ।
पाटलीपुत्रनगरं वृत्तं लूतेव तन्तुभिः ॥३६७॥ युग्मं ॥
प्राग्वदादितस्तुम्बर्यामूचे ऽन्यो मम वेश्मनि ।
शालिरेको भिन्नभिन्नशालिबीजप्रसूतिमान् ॥३६८॥
अन्यो गर्दभिकाशालिः स पुनर्लूनलूनकः ।
पुनः पुनः फलत्येवेत्येतद्रत्नद्वयं च नः ॥३६९॥ युग्मं ॥
प्राग्वदादितस्तुम्बर्यां स्माहान्यो मदविह्वलः ।
सहस्रसङ्ख्यं द्रविणं विद्यते मम सद्मनि ॥३७०॥
अनृणो ऽहं सुगन्धिश्च जात्यचन्दनचर्चितः ।
सदापि वश्या मे भार्या मे तुल्यो नापरः सुखी ॥३७१॥
॥ युग्मं ॥

366—369 d [illegible] om. 368 b [illegible] C श्चोत्थि मद्वेश्मनि । 369 d MSS. नमः for च नः । 370 d C वेश्मनि ।

प्राग्वदादितआरभ्यथो मतिज्ञानमहानिधिः ।
चणिसूरेवमग्रासीत्सर्वेषां श्रीमतां श्रियम् ॥ ३७२ ॥
एकयोजनगामीभपदप्रमितिकाञ्चनम् ।
तथैकतिलजतिलमिताः स्वर्णसहस्रकाः ॥ ३७३ ॥
प्रतिमासं चैकदिननवनीतभवं घृतम् ।
एकस्मिन्दिवसे जातास्तथा जात्यकिशोरकाः ॥ ३७४ ॥
कोष्ठागाराणां भरणप्रमाणाः शालयो ऽपि च ।
तैश्चाणक्याय ददिरे तन्मर्मविद्भयाद्धि यः ॥ ३७५ ॥
॥ त्रिभिर्विशेषकं ॥
चक्रे समर्थमर्थेन तेन मौर्यं चणिप्रसूः ।
धियां निधिरमात्यो हि कामधेनुर्महीभुजाम् ॥ ३७६ ॥
इतश्च तस्मिन्दुष्काले कराले द्वादशाब्दिके ।
आचार्यः सुस्थितो नाम चन्द्रगुप्तपुरे ऽवसत् ॥ ३७७ ॥
अन्नदौःस्थ्येन निर्वाहाभावान्निजगणं स तु ।
देशान्तराय व्यसृजत्तत्रैवास्थात्स्वयं पुनः ॥ ३७८ ॥
व्यापुत्य क्षुल्लकौ द्वौ तु तत्रैवाजग्मतुः पुनः ।
आचार्यस्य क्रियायत्ताविति प्रश्नावर्तताम् ॥ ३७९ ॥
वियोगं गुरुपादानां न ज्ञात्वा सोढुमीश्वरे ।
गुरोः पार्श्वे जीवितं वा मरणं वा तयोः शुभम् ॥ ३८० ॥
आचार्यः स्माह न क्षमं युवाभ्यां साध्वमुत्र हि ।
अगाधे क्लेशजलधौ दुर्गे मुग्धौ पतिष्यथः ॥ ३८१ ॥

---

376 c C [illegible] । 378 a A [illegible] A B D देशान्तर C देशान्तर ।
381 c C [illegible] ।

इत्युक्त्वा तावनुज्ञातौ गुरुणा तत्र तस्थतुः ।
भक्त्या शुश्रूषमाणौ तं तत्पदाम्भोजषट्पदौ ॥ ३८२ ॥
ततो दुर्भिक्षमाहात्म्याद्भिक्षयात्यल्पलब्धया ।
पारयित्वा गुरूणां तौ भुञ्जानावत्यसीदताम् ॥ ३८३ ॥
अपूर्यमाणाहारौ तौ क्षीयमाणौ बुभुक्षया ।
क्षुल्लकावषडक्षीणौ मन्त्रयामासतुर्मिथः ॥ ३८४ ॥
प्रकाश्यमानं गुरुणा गीतार्थान्संयतान्प्रति ।
अश्रौष्वावामदृश्यत्वकारकं दिव्यमञ्जनम् ॥ ३८५ ॥
तत्प्रयोज्य प्रयोगोऽयमावाभ्यां कुक्षिपूर्तये ।
पूर्णाकुक्षी च निश्चिन्तौ गुरुपादानुपास्वहे ॥ ३८६ ॥
अदृश्यीभूय सम्भूय तौ द्वौ तत्रैव वासरे ।
भोजनावसरे चन्द्रगुप्तस्याभ्यर्णमीयतुः ॥ ३८७ ॥
अदृश्यमानौ तौ क्षुल्लौ चन्द्रगुप्तस्य भाजने ।
बुभुजाते यथाकामं बन्धू प्राणप्रियाविव ॥ ३८८ ॥
एवं दिने दिने ताभ्यां भुञ्जानाभ्यां महीपतिः ।
ऊनोदरत्वेनोदस्थात्तपस्वीव जितेन्द्रियः ॥ ३८९ ॥
कृष्णपक्षक्षपाजानिरिव क्षामः शनैः शनैः ।
चन्द्रगुप्तनरेन्द्रोऽभूत्ताभ्यामाच्छिन्नभोजनः ॥ ३९० ॥
निजामरतिं कस्यापि तथाप्यकथयन्न सः ।
नित्यं क्षुत्पीडितोऽप्यस्थान्मदवानिव वारणः ॥ ३९१ ॥

---

387 a MSS. चन्द्रौ । 388 b A भोजने ।

अपृच्छदेकदैकान्ते मौर्यं मौर्यगुरुः सुधीः ।
प्रत्यहं क्षीयमाणो ऽसि वत्स क्षयरुजेव किम् ॥ ३९२ ॥
मौर्यो ऽवदन्न तावन्मे ह्रासेन परिवेष्यते ।
किं तु को ऽपि प्रेत इवाच्छिनत्ति मम भोजनम् ॥ ३९३ ॥
तटस्थिता विदन्त्यार्या मां पूर्णाहारभोजनम् ।
न लब्धमपि भुञ्जे ऽहं न जाने किंचिदप्यदः ॥ ३९४ ॥
चाणक्यो ऽवोचदद्यापि किमेवमसि मुग्धधीः ।
बुभुक्षुणेवातत्त्वज्ञेनात्मा यत्खेदितश्चिरम् ॥ ३९५ ॥
भवत्विदानीमपि हि युक्तमाख्यातवानसि ।
तव भोजनलुण्टाकमादास्ये न चिरादहम् ॥ ३९६ ॥
इत्युक्त्वा चन्द्रगुप्तस्य भोजनस्थानभूतले ।
प्रातस्तरम्भोरुचूर्णं मसृणं चिक्कणादपि ॥ ३९७ ॥
भोक्तुं निषण्णे [illegible] नृपे भोक्तुमागतयोस्तयोः ।
पदानि प्रत्यबिम्बन्त मसृणे तत्र भूतले ॥ ३९८ ॥
तानि भुक्तोत्थिते तत्र भूतले चणिनन्दनः ।
पदपङ्क्तिं तयोर्दृष्ट्वा चिन्तयामास चेतसि ॥ ३९९ ॥
मानुषः को ऽपि भून्यस्तपादः सिद्धाञ्जनः खलु ।
हरते भोजनं स्यामादृश्यीभूय लीलया ॥ ४०० ॥
इति द्वितीयदिवसे चाणक्यो भोजनौकसि ।
भोजनावसरे धूमं रुद्धच्छिद्रमकारयत् ॥ ४०१ ॥

---

393 b B ह्रासेन, C ह्रसेन A ह्रस्वत्वेन । 400 b A C •पादः•, d A D चरदीभूय । 401 c B C धूपं, A धूमं ।

प्राग्वद्राज्ञा सहैकत्र स्थाले भुञ्जानयोस्तयोः ।
बाष्पायन्ते स्म नेत्राणि धूमस्तोमेन मूर्छता ॥ ४०२ ॥
नेत्राञ्जनं तयोः सर्वमदृश्यीकारकारणम् ।
बाष्पवारिभिराकृष्य द्रागनीयत पङ्कवत् ॥ ४०३ ॥
अनञ्जनदृशौ तौ तु भुञ्जानौ तत्र भाजने ।
दृष्टौ नरेन्द्रलोकेन कोपाद्भ्रुकुटिकारिणा ॥ ४०४ ॥
नाजल्पत्को ऽपि चाणक्यभयान्न्यक्कारतस्तयोः ।
चाणक्यस्तु प्रवचनोड्डाहभीरुरदो ऽवदत् ॥ ४०५ ॥
पितराविवरूपेण युवां हि परमेश्वरौ ।
कृत्वा प्रसादमस्मासु स्वस्मै स्थानाय गच्छतम् ॥ ४०६ ॥
तयोर्गतवतो राजा सविषादमदो ऽवदत् ।
अनयोरहमुच्छिष्टभोजनेनास्मि दूषितः ॥ ४०७ ॥
चाणक्यः स्माह माकार्षीर्दोषत्वारोपणं गुणे ।
आहारसंविभागेन मुनीनां पुण्यवानसि ॥ ४०८ ॥
धन्यः को ऽपि हि यो भिक्षामनगाराय यच्छति ।
एकस्थालातिथीभूतमुनिस्त्वं तु किमुच्यते ॥ ४०९ ॥
एवं च मौर्यं सम्बोध्याचार्याणां पार्श्वमेत्य च ।
चाणक्यो ऽदादुपालम्भं क्षुल्लान्यायं प्रकाशयन् ॥ ४१० ॥
आचार्यः स्माह को दोषः क्षुल्लयोरनयोर्ननु ।
स्वकुक्षिम्भरयः सत्पुरुषा यद्भवादृशाः ॥ ४११ ॥

---

402 d c धूम, B धूमं. A मूर्छिताः ।

चाणक्योऽपि तमाचार्यं मिथ्यादुष्कृतपूर्वकम् ।
वन्दित्वाभ्यधात् साधु शिक्षितोऽस्मि प्रमद्वरः ॥ ४१२ ॥
अद्यप्रभृति यद्भक्तपानोपकरणादिकम् ।
साधूनामुपकुरुते तदादेयं मदोकसि ॥ ४१३ ॥
इत्यभिग्रहमादाय चाणक्यो दृढनिश्चयः ।
तदादि पालयामास स्वगार्हस्थ्यं कृतार्थयन् ॥ ४१४ ॥
चन्द्रगुप्तं तु मिथ्यादृक् पाषण्डिमतभावितम् ।
अनुशासितुमारेभे हितस्तस्य पितेव सः ॥ ४१५ ॥
असंयता ह्यमी पापाः प्रकृत्या स्त्रीषु लम्पटाः ।
अपि संभाषितुं नार्हास्तत्पूजायां तु का कथा ॥ ४१६ ॥
कषायपरिवश्येषु कृतघ्नेषु दुरात्मसु ।
एतेषु निष्फलं दानमूषरेष्वम्बुवृष्टिवत् ॥ ४१७ ॥
आत्मानमाश्रितं चापि राजन्नश्मतरण्डवत् ।
पातयन्तु भवाम्भोधौ तद्भक्तिं तेषु मा कृथाः ॥ ४१८ ॥
मौर्योऽप्यवादीन्मम हीदं त्वद्वचो गुरुसाक्षिणम् ।
नैते संयमिन इति प्रत्यायय तथापि माम् ॥ ४१९ ॥
पुरे प्रघोषं चाणक्यस्तदेवमकारयत् ।
धर्मं श्रोष्यति सर्वेषामपि पाषण्डिनां नृपः ॥ ४२० ॥
ततश्चाहूय तान्सर्वानन्तःप्रासादवीथिषु ।
देशे निवेशयामास स विविक्ते विविक्तधीः ॥ ४२१ ॥

---

413 d A सर्वोकसि । 414 c C तदादि । 417 a C कष ।

शुद्धान्तासन्नदिग्भागे चाणक्येनाग्रतो ऽपि हि ।
अक्षेप्यलक्ष्यं श्लक्ष्णं च लोष्टचूर्णं महीतले ॥ ४२२ ॥
तत्रोपदेशनार्थं ते चाणक्येन प्रवेशिताः ।
ज्ञात्वा विविक्तं स्थानं तच्छुद्धान्ताभिमुखं ययुः ॥ ४२३ ॥
स्त्रीलोलास्ते स्वभावेन नृपस्त्रैणमसंयताः ।
गवाक्षविवरैर्द्रष्टुमुपचक्रमिरे ततः ॥ ४२४ ॥
ते राजपत्नीः पश्यन्तस्तावदस्थुर्दुराशयाः ।
न यावदाययौ राजा निषेदुस्तु तदागमे ॥ ४२५ ॥
ततश्च चन्द्रगुप्ताय धर्ममाख्याय ते ययुः ।
पुनरागममिच्छन्तो ऽन्तःपुरस्त्रीदिदृक्षया ॥ ४२६ ॥
गतेषु तेषु चाणक्यश्चन्द्रगुप्तमभाषत ।
पश्य स्त्रीलोलताचिह्नं वत्स पाषण्डिनामिह ॥ ४२७ ॥
यावत्त्वदागमं तैर्हि त्वदन्तःपुरमीक्षितम् ।
गवाक्षविवरक्षिप्तलोचनैरजितेन्द्रियैः ॥ ४२८ ॥
पदपङ्क्तिमिमां तेषां सूक्ष्मां प्रतिबिम्बिताम् ।
गवाक्षविवराधस्ताद्दृष्ट्वा प्रत्ययमुद्वह ॥ ४२९ ॥
सञ्जातप्रत्यये राज्ञि द्वितीये ऽहनि तद्गुरुः ।
धर्ममाख्यातुमाह्वास्त तत्र जैनमुनीनपि ॥ ४३० ॥
निषेदुस्ते प्रथमतो ऽप्यासनेष्वेव साधवः ।
स्वाध्यायावश्यकेनाथ नृपागममपालयन् ॥ ४३१ ॥
ततश्च धर्ममाख्याय साधवो वसतिं ययुः ।
ईर्यासमितिलीनत्वात्पश्यन्तो भुवमेव ते ॥ ४३२ ॥

दीर्घदर्शी विमृश्यैवं वज्रो वज्रदृढाशयः ।
प्रतिमास्थ इव स्थानान्न चचाल मनागपि ॥१२३॥
राजाथावादीत्सुनन्दे त्वमपसर्प शिशुर्ह्यसौ ।
नागादाहूयमानस्त्वामजाननिव मातरम् ॥१२४॥
ततो राज्ञा धनगिरिः प्राज्ञावसरमीरितः ।
रजोहरणमुत्क्षिप्य जगादैवं मिताक्षरम् ॥१२५॥
भवेद्व्यवसायस्ते तत्त्वज्ञो ऽसि यदि स्वयम् ।
तद्रजोहरणं धर्मध्वजमादत्स्व मे ऽनघ ॥१२६॥
वज्रस्तदैव कलभ इवोत्क्षिप्तकरो द्रुतम् ।
दधावाभिधनगिरि प्रक्वणत्पादघर्घरः ॥१२७॥
गत्वा च पितुरुत्सङ्गमधिरुह्य विशुद्धधीः ।
तद्रजोहरणं लीलासरोजवदुपाददे ॥१२८॥
वज्रेण पाणिपद्माभ्यां रजोहरणमुद्धृतम् ।
विरराज रोमगुच्छ इव प्रवचनश्रियः ॥१२९॥
उल्लसत्कुन्दकलिकाकारदन्तद्युति स्मितः ।
स रजोहरणाद्दृष्टिं नान्यथादान्मनागपि ॥१३०॥
दिनात्यये पद्मिनीव सद्यो ग्लानिमुपेयुषी ।
हस्तविन्यस्तचिबुका सुनन्दैवमचिन्तयत् ॥१३१॥
भ्राता मम प्रव्रजितो भर्ता प्रव्रजितो ऽथ मे ।
प्रव्रजिष्यति पुत्रो ऽपि प्रव्रजाम्यहमप्यतः ॥१३२॥

---

127 d C घुर्घरः ।

न मे माता न मे भर्ता न मे पुत्रो ऽपि सम्प्रति ।
तन्ममापि परिव्रज्या श्रेयसी गृहवासतः ॥१३३॥
स्वयमेवेति निर्णीय सुनन्दा सदनं ययौ ।
वज्रमादाय वसतिं प्रययुर्मुनयो ऽपि ते ॥१३४॥
व्रतेच्छुर्न पपौ स्तन्यं वज्रस्तावद्वया अपि ।
इत्याचार्यैः परिव्राज्य साध्वीनां पुनरार्प्यत ॥१३५॥
उदग्रभाग्यविशेषेण भववैराग्यसङ्गमम् ।
सुनन्दापि प्रवव्राज तद्गच्छाचार्यसंनिधौ ॥१३६॥
पठदार्यमुखाच्छ्रुत्वाङ्गान्येकादशापि हि ।
पदानुसारी भगवान्वज्रो ऽधीयाय धीनिधिः ॥१३७॥
अष्टवर्षो ऽभवद्वज्रो यावदार्याप्रतिश्रये ।
ततो वसत्यामानिन्ये हर्षभाग्भिर्महर्षिभिः ॥१३८॥
अन्यदा वज्रगुरवः प्रत्यवन्तीं प्रतस्थिरे ।
धाराधरो ऽखण्डधारमन्तराले ववर्ष च ॥१३९॥
यक्षमण्डपिकाप्राये स्थाने क्वाप्यन्तराले ।
आचार्या वज्रगुरवस्ते तस्थुः सपरिच्छदाः ॥१४०॥
प्राग्जन्मसुहृदो वज्रस्यामरा जृम्भकाह्वयाः ।
सत्त्वं परीक्षितुं तस्य वणिङ्मूर्तीर्विचक्रिरे ॥१४१॥
उत्पर्याणितसद्धान्यवृषभं घर्घरीदकम् ।
सपत्तलोहितशकटं सन्निवेशितकेणिकम् ॥१४२॥

---

141 b C वणिग्रूपा ।

जयनच्छन्नविक्रेयवस्तुगोणीपरम्परम् ।
शाङ्खान्तोत्तीर्णपान्थौकं भुञ्जानजनसङ्कुलम् ॥१४३॥
तृणप्रावरणच्छन्नसचरत्कर्मठज्जनम् ।
आवासं ते दिविषदो वणिग्रूपा विचक्रिरे ॥१४४॥

॥ त्रिभिर्विशेषकम् ॥

वारिदे विरतप्राये तानाचार्यान्दिवौकसः ।
न्यमन्त्रयन्त भिक्षार्थं छद्मवन्दनपूर्वकम् ॥१४५॥
निवृत्तामिव विज्ञाय वृष्टिमाचार्यपुङ्गवाः ।
वज्रमादिदिशुर्भिक्षानयने विनयोज्ज्वलम् ॥१४६॥
वज्रो ऽथावश्यिकीं कृत्वा द्वितीयमुनिना सह ।
विहर्तुं निरगादीर्याशुद्धिमध्वनि चिन्तयन् ॥१४७॥
तुषारान्पततो दृष्ट्वा त्रसरेणुनिभानपि ।
वज्रो निववृते च द्राग्भीतो ऽप्कायविराधनात् ॥१४८॥
तुषारमाणामप्यनुवृष्टिं देवा निरुध्य ताम् ।
आह्वायन पुनर्वज्रं वृष्टिर्नास्तीति भाषिणः ॥१४९॥
वज्रस्तदुपरोधेन शुद्धभावेन चाचलत् ।
जगाम च तदावासं भक्तपानादिसुन्दरम् ॥१५०॥
ससम्भ्रमेषु देवेषु तेषु भक्तादिदित्सया ।
द्रव्यक्षेत्रकालभावैरुपयोगमदत्त सः ॥१५१॥
कूष्माण्डकादिकं द्रव्यं कुतो राष्ट्रमसम्भवि ।
इदमुज्जयिनीक्षेत्रं स्वभावादपि कर्कशम् ॥१५२॥
प्रावृषि प्रथमायां च द्रव्यस्यास्य कथापि का ।

दातारोऽप्यनिमेषाक्षा अभूस्पृक्चरणा इति ॥१५३॥
नियतं देवपिण्डोऽयं साधूनां न हि कल्पते ।
तस्मादनात्तपिण्डोऽपि भजामि गुरुसंनिधौ ॥१५४॥
॥ त्रिभिर्विशेषकम् ॥

इत्यनादाय तद्भिक्षां वज्रस्वामी न्यवर्तत ।
प्रत्यक्षीभूय तैस्ताथो जगदे विस्मितैः सुरैः ॥१५५॥
वयं हि जृम्भका देवाः प्राग्जन्मसुहृदस्तव ।
त्वां द्रष्टुमागमामेह त्वमद्यापि हि नः सुहृत् ॥१५६॥
अथ वैक्रियलब्ध्याख्यां विद्यां तोषस्तोऽमराः ।
निष्क्रयं कुसुमायाया इव वज्राय ते ददुः ॥१५७॥
ज्येष्ठे मास्यन्यदा वज्रो विहरंश्च बहिर्भुवि ।
नैगमीभूय तैर्देवैर्घृतपूरैर्न्यमन्त्र्यत ॥१५८॥
वज्रो गत्वा तदाधाचे देवपिण्डं च पूर्ववत् ।
ज्ञात्वा न खलु जग्राहोपयोगविदुरो हि सः ॥१५९॥
वज्राय पूर्ववद्ददे विद्यामाकाशगामिनीम् ।
प्रददुस्तोषभाजस्ते स्वं स्वं स्थानमथो ययुः ॥१६०॥
ततो विहरतो गच्छमध्ये वज्रस्य चाभवत् ।
पदानुसारिलब्धात्मा सुस्थिरैकादशाङ्ग्यपि ॥१६१॥
अधीयमानमश्रौषीद्यत्पूर्वगताद्यपि ।
तत्तज्जग्राह भगवान्वज्रो मेधाविनां वरः ॥१६२॥

---

155 b D प्रणतम् । 155 a A क्षेत्र ।

यदा पठेति स्थविरा वज्रं स्वाध्यायदापिनः ।
किंचिद्गुणगुणारावं निद्रालुरिव निर्ममे ॥१६३॥
स्थविराज्ञाभङ्गभीरुः स्वशक्तिं चाप्रकाशयन् ।
पव्यक्तमुशृण्वन्किंचित्तो ऽध्यौचौत्पठतो ऽपरान् ॥१६४॥
अन्यस्मिन्नह्नि मध्याह्ने भिक्षार्थं साधवो ययुः ।
आचार्यमिश्रा अपि ते बहिर्भूमौ विनिर्ययुः ॥१६५॥
तस्थौ तु वज्र एकाकी पश्चाद्वसतिरक्षकः ।
स साधूनां मण्डलेन वेष्टिकाः सन्न्यवीविशत् ॥१६६॥
आचार्य इव शिष्याणां तासां मध्ये निषद्य सः ।
वाचनां दातुमारेभे प्रावृडम्भोधरध्वनिः ॥१६७॥
एकादशानामङ्गानामपि पूर्वगतस्य च ।
वाचनां पुनरागच्छन् गुरुः शुश्राव दूरतः ॥१६८॥
वसतिद्वारमायातः श्रुत्वा गद्गदारवम् ।
आचार्यो ऽचिन्तयत्किं नु साधवः शीघ्रमागताः ॥१६९॥
अस्मदागमनममी पालयन्तो महर्षयः ।
स्वाध्यायं कुर्वते भिक्षामुपादाय समागताः ॥१७०॥
आचार्यास्तु विदाञ्चक्रुः क्षणं स्थित्वा विमृश्य च ।
यथैष वज्रबालर्षेर्वाचनां ददतो ध्वनिः ॥१७१॥
असौ पूर्वगतस्यैकादशाङ्ग्या अपि वाचनाम् ।
यद्दत्ते तत्किमध्यैष्ट गर्भस्थो विस्मयामहे ॥१७२॥
स्थविरैः पाठ्यमानो ऽयमत एवालसायते ।
बाल्यात्पाठासह इति ज्ञात्वाशिष्म तदा वयम् ॥१७३॥

अस्मदाकर्णनाशङ्की लज्जितो मा स्म भूदसौ।
रोमाञ्चितः शिष्यगुणैराचार्य इत्यपासरत् ॥१७४॥
शब्देन महताचार्यास्तुङ्गैर्नैषेधिकीमथ।
गुरूणां शब्दमाकर्ण्योदस्थाद्वज्रो ऽपि विष्टरात् ॥१७५॥
उपेत्य जिह्मितगतिर्न यावत्प्राविशद्गुरुः।
तावत्ता वेष्टिका वज्रः स्वस्वस्थाने मुमोच च ॥१७६॥
अभ्येत्य च गुरोर्दण्डमाददे ऽंह्री ममार्ज च।
सद्रजोवन्दनेनोच्चैः स्वं भालमवगुण्ठयन् ॥१७७॥
आसनस्थस्य च गुरोः पादौ प्रासुकवारिणा।
क्षालयामास शिरसा ववन्दे पादवारि च ॥१७८॥
आचार्यश्चिन्तयामास महात्मा बालको ऽप्यसौ।
श्रुतसागरपारीणो रत्नोवज्ञास्पदीभवन् ॥१७९॥
अजानन्तो ऽस्य माहात्म्यं बालस्याप्यस्य साधवः।
कुर्वन्ति न यथावज्ञां प्रयतिष्यामहे तथा ॥१८०॥
इत्याचार्यो विभावर्यां शिष्येभ्यो ऽकथयन्निति।
यास्यामो ग्राममसुकं दिनाहं तत्र नः स्थितिः ॥१८१॥
व्यजिज्ञपन्गुरुं योगप्रतिपन्नाश्च साधवः।
भगवन्वाचनाचार्यस्तत्को ऽस्माकं भविष्यति ॥१८२॥
वज्रो वो वाचनाचार्यो भवितेत्यादिशद्गुरुः।
भक्त्यादविचार्यैव प्रत्यपद्यन्त ते तथा ॥१८३॥

174 d E रम्॰। 178 b D पासुक॰।

प्रातःकृत्यं कायोत्सर्गवाचनाग्रहणादिकम् ।
कर्तुं ते साधवो वज्रं निषद्यायां न्यषादयन् ॥१८४॥
गुर्वाज्ञास्तीति वज्रो ऽपि निषद्यायामुपाविशत् ।
आचार्यस्येव विनयं तस्याकार्षुश्च साधवः ॥१८५॥
सर्वेषामपि साधूनामानुपूर्व्या परिस्फुटान् ।
सङ्क्रान्त्या वज्रलेपाभान्वज्रो ऽथालापकान्ददौ ॥१८६॥
ये ऽत्यल्पमेधसस्ते ऽपि साधवो ऽध्येतुमागमम् ।
उपचक्रमिरे वज्रादादायादाय वाचनाम् ॥१८७॥
अमोघवाचनो वज्रो बभूवातिजडेष्वपि ।
तच्चाद्भुतं दृष्ट्वा गच्छः सर्वो विसिस्मिये ॥१८८॥
आलापान्साधवः पूर्वमधीतान्स्फुरितानपि ।
संवादार्थमपृच्छंश्च वज्रो ऽप्याख्यत्तथैव तान् ॥१८९॥
तावदेकवाचनया वज्रात्पेठुर्महर्षयः ।
अप्यनेकवाचनाभिर्यावन्न गुरुसंनिधौ ॥१९०॥
ते ऽभ्यधुः साधवो ऽन्योन्यं गुरुर्यदि विलम्बते ।
वज्रपार्श्वे तदा शीघ्रं श्रुतस्कन्धः समाप्यते ॥१९१॥
गुरुभ्यो ऽभ्यधिकं वज्रं मेनिरे मुनयो गुणैः ।
एकगुरुदीक्षिते हि सुगुणे मोदते गणः ॥१९२॥
आचार्याश्चिन्तयामासुरेतावद्भिश्च वासरैः ।
वज्रो ऽस्मत्परिवारस्य भावी ज्ञातगुणः खलु ॥१९३॥

---

184 b D °पारयादिकं । 190 a A C वाचमया । 192 d MSS गुणः ।

वज्रमध्यापयामो ऽथानधीतं यद्यदस्य हि ।
उपेत्य पात्रतां याति गुरोः शिष्यो ऽमलैर्गुणैः ॥१९४॥
चिन्तयित्वैवमाचार्याः कथिते ऽह्नि समाययुः ।
मुनयो वज्रसहितास्तत्पादांश्च ववन्दिरे ॥१९५॥
किं वः स्वाध्यायनिर्वाहो भवतीति गुरूदिते ।
बभाषिरे देवगुरुप्रसादादिति साधवः ॥१९६॥
वन्दित्वा पुनराचार्यांश्छिष्याः सर्वे व्यजिज्ञपन् ।
अस्माकं वाचनाचार्यो वज्रो ऽस्तु भवदाज्ञया ॥१९७॥
वज्रश्चिरमवज्ञातो ऽस्माभिरज्ञाततद्गुणैः ।
इदानीं भगवत्पादा इव बालो ऽप्ययं हि नः ॥१९८॥
बालो ऽप्यस्त्वेष गच्छस्य गुरुर्गुरुगुणान्वितः ।
प्रदीपः कुन्दकलिकामात्रो ऽप्युद्योतयेद्गृहम् ॥१९९॥
आचार्यवर्या जगदुर्भवत्त्वेवं तपोधनाः ।
किं त्वसौ नावमन्तव्यो विद्यावृद्धो ऽर्भको ऽपि हि ॥२००॥
अगमाम वयं ग्राममाचार्यो ऽयं च वो ऽर्पितः ।
अत एव मया वित्थ यूयमस्येदृशान्गुणान् ॥२०१॥
अन्यथा वाचनाचार्यपदवीं नायमर्हति ।
गुर्वदत्तं यतो ऽनेन कर्णश्रुत्याददे श्रुतम् ॥२०२॥
सङ्क्षेपानुष्ठानरूपोत्सारकल्पो ऽस्य संयताः ।
कार्यश्चाचार्यपदवीयोग्यो येन ततो भवेत् ॥२०३॥

---

199 a C° प्रदीप A प्रदीपश्च । 200 c D विज्ञो । 201 a C D आगमाम । 203 b C °त्सारकल्पो ।

तस्य प्रागपठितं श्रुतमर्थसमन्वितम् ।
शीघ्रमध्यापयामास वज्रं गुरुरुदारधीः ॥२०४॥
साक्षिमात्रीकृतगुरुर्वज्रो गुर्वर्पितं श्रुतम् ।
प्रतिबिम्बमिवादर्शः सर्वं जग्राह लीलया ॥२०५॥
श्रुतज्ञो ऽभूत्तदा वज्रो यथा तस्य गुरोरपि ।
दुर्भेदचिरसन्देहस्तोमसमुद्धरतां ययौ ॥२०६॥
दृष्टिवादो ऽपि हृदये यावन्मात्रो ऽभवद्गुरोः ।
तावानुपाददे वज्रेणाम्भश्चुलुकलीलया ॥२०७॥
अन्यदा विहरन्तो ग्रामाद्ग्रामं पुरात्पुरम् ।
पुरं दशपुरं जग्मुराचार्याः सपरिच्छदाः ॥२०८॥
तदा चोज्जयिनीपुर्यां सम्पूर्णदशपूर्वभृत् ।
आचार्यो ऽस्ति तदेतस्मादादेया दशपूर्व्यपि ॥२०९॥
एकादशाङ्गीपाठो ऽपि येषां कष्टायते भृशम् ।
ते स्म शिष्या दशपूर्वग्रहणे कथमीश्वराम् ॥२१०॥
अथवास्त्येव जं वज्रः कृतमीदृशचिन्तया ।
पदानुसारिलब्धा हि दृष्टप्रत्यय एव सः ॥२११॥
इत्यादिशद्गुरुर्वज्रं त्वं वत्सोज्जयिनीं व्रज ।
तत्राधीष्व दशपूर्वीं भद्रगुप्तगुरोर्मुखात् ॥२१२॥
अत्यल्पमेधसः सर्वे न च सब्रह्मचारिणः ।
न ह्यलम्भूष्णवो ऽमुत्र यत्राहमपि कुण्ठधीः ॥२१३॥
अधीत्य दश पूर्वाणि शीघ्रमेहि[*] मदाज्ञया ।
तत्र सन्निहिताः सन्तु सौम्यग्रामसदेवताः ॥२१४॥

तन्मुखाच्च प्रसरतु दशपूर्वी महर्षिषु ।
हे वत्स कूपादुदकमिवोपवनशाखिषु ॥२१५॥
एवं सिंहगिरिर्वज्रमवन्तीं गन्तुमादिशत् ।
वर्तते स्थाविरः कल्प इत्यूचे द्वौ च तत्समम् ॥२१६॥
शेषामिवाज्ञामादाय मूर्ध्ना सिंहगिरेर्गुरोः ।
वज्रो ऽगाद्भद्रगुप्ताङ्घ्रिपूतामुज्जयिनीं पुरीम् ॥२१७॥
प्राप्ते चोज्जयिनीपुर्यां सुनन्दानन्दने मुनौ ।
निरैक्षिष्ट भद्रगुप्ताचार्यः स्वप्नं शुभे क्षणे ॥२१८॥
यदादाय मम करात् क्षीरपूर्णं पतद्ग्रहम् ।
आगन्तुको ऽपिबत्कश्चित्तृप्तिं च परमामगात् ॥२१९॥
शिष्येभ्यः कथयामास गुरुः स्वप्नं च तं प्रगे ।
तस्यार्थं विविधं ते ऽपि यथामति व्यचारयन् ॥२२०॥
गुरुरूचे न जानीयातिथिः को ऽप्यागमिष्यति ।
स सार्थं सूत्रमत्तः सर्वमादास्यते सुधीः ॥२२१॥
वज्रो ऽपि नगरीद्वारे सर्वरीमतिवाह्य च ।
प्रभाते ऽगाद्भद्रगुप्ताचार्यवर्यप्रतिश्रयम् ॥२२२॥
दूरतो वज्रमालोक्य गुरुरिन्दुमिवार्णवः ।
उल्लासं कलयामास परं परमया मुदा ॥२२३॥
आचार्यो ऽध्यायदहो मे सौभाग्येनाद्य धीरिति ।
किमास्मिन्नात्मरमसुसमारोपयामि च ॥२२४॥
प्रसिद्धिमद्भुतां वज्रस्याहसिं परिभाव्य च ।
वज्रो ऽयमिति निश्चिक्ये भद्रगुप्तो महामुनिः ॥२२५॥

वन्दनाभिमुखं वज्रं भद्रगुप्तो ऽथ सस्वजे ।
श्लाघीयसी खलूत्कण्ठा विनयं न प्रतीक्षते ॥२२६॥
आरोप्याङ्के भद्रगुप्ताचार्यो वज्रमभाषत ।
अपि तद्वदनाम्भोजं स्वनेत्रे भृङ्गतां नयन् ॥२२७॥
कच्चित्सुखविहारस्ते कच्चित्ते ऽङ्गमनामयम् ।
कच्चित्तपस्ते निर्विघ्नं कच्चित्ते कुशली गुरुः ॥२२८॥
किं किंचित्कार्यमुद्दिश्य विहारक्रमतो ऽथवा ।
इहागतो ऽसि वज्रार्य कथयास्मान्प्रमोदय ॥२२९॥
वन्दित्वा भद्रगुप्तर्षिं वज्रो विरचिताञ्जलिः ।
उवाच वदनद्वारविन्यस्तमुखवस्त्रिकः ॥२३०॥
यद्वत्सुखविहारादि पूज्यपादैरपृच्छ्यत ।
तत्तत्तथैव देवानां गुरूणां च प्रसादतः ॥२३१॥
अध्येतुं दश पूर्वाणि त्वामागां गुर्वनुज्ञया ।
तद्वाचनाप्रदानेन प्रसीद भगवन्मयि ॥२३२॥
ततश्च दशपूर्वीं तं भद्रगुप्तो ऽध्यजीगपत् ।
गुरोरजनितक्लेशो वज्रो ऽथ दशपूर्व्यभूत् ॥२३३॥
यत्र चाध्येतुमारब्धं व्याख्यानुज्ञापि तत्र हि ।
इति सिंहगिरेः पार्श्वे वज्रो गन्तुमचिन्तयत् ॥२३४॥
इत्यापृच्छ्य भद्रगुप्तं वज्रो दशपुरं पुनः ।
अधीतदशपूर्वो ऽगाद्गृहीतामुरिवामुदः ॥२३५॥

---

228 b C मनना॰ । 232 c D ॰प्रसादेन । 233 a A C दशपूर्वितं, c MSS. ॰भूत् A पूर्वे॰ ।

दशपूर्वीपर्यवागतेर्वज्रस्याभ्यागतस्य तु ।
पूर्वानुज्ञा कृता सिंहगिरिणा गुरुणा तदा ॥२३६॥
वज्रस्य पूर्वानुज्ञायां विदधे जृम्भकामरैः ।
महिमा दिव्यकुसुमप्रकरादिभिरद्भुतः ॥२३७॥
अर्पयित्वा सिंहगिर्याचार्यो वज्रमुनेर्गणम् ।
प्रत्याख्यायान्नपानादि कालं कृत्वामरो ऽभवत् ॥२३८॥
वज्रस्वाम्यपि भगवान्मुनिपञ्चशतीवृतः ।
विजहार महीं भव्यजनकैरवचन्द्रमाः ॥२३९॥
पुनानः क्ष्मां विहारेण वज्रस्वामी महामुनिः ।
यत्र यत्र ययौ तत्र तत्र ख्यातिरभूदियम् ॥२४०॥
अहो अस्योज्ज्वलं शीलमहो लोकोत्तरं श्रुतम् ।
अहो सौभाग्यमनघमहो लवणिमाद्भुतः ॥२४१॥
इतश्च पाटलीपुत्रे धनो नाम महाधनः ।
श्रेष्ठी गुणगणश्रेष्ठो बभूव भुवि विश्रुतः ॥२४२॥
कन्या सुरूपा तस्याभूदभिधानेन रुक्मिणी ।
रुक्मिणीव पुनरपि रूपान्तरमुपेयुषी ॥२४३॥
तस्य च श्रेष्ठिनो यानशालायाममलाशयाः ।
व्रतिन्यो निवसन्ति स्म श्रीवज्रस्य महामुनेः ॥२४४॥
व्रतिन्यस्तास्तु वज्रस्य चक्रिरे गुणसंस्तवम् ।
स्वाध्यायावश्यकसमो गुरूणां हि गुणस्तवः ॥२४५॥

---

236 a MSS. पूर्वं ।

तां तां वज्रस्य सौभाग्यकथामाकर्ण्य रुक्मिणी ।
वज्रमेव पतीयन्ती प्रत्यश्रौषीदिदं च सा ॥२४६॥
वज्रः स्याद्यदि मे भर्ता भोक्ष्ये भोगानहं तदा ।
अन्यथा तु कृतं भोगैः किं भोगैर्दयितं विना ॥२४७॥
तस्या वरयितारश्च ये केचिदुपतस्थिरे ।
सा प्रत्यषेधत्तान् सर्वान्मुखमोटनलीलया ॥२४८॥
प्रव्रजिताश्च तां प्रोचुरपि मुग्धासि रुक्मिणि ।
वीतरागं प्रव्रजितं यद्वज्रं त्वं वुवूर्षसि ॥२४९॥
रुक्मिण्यभिदधे वज्रो यदि प्रव्रजितस्तदा ।
प्रव्रजिष्याम्यहमपि या गतिस्तस्य सैव मे ॥२५०॥
इतश्च भगवान्वज्रः पाटलीपुत्रपत्तने ।
विहारेण ययौ धर्मदेशनावारिवारिदः ॥२५१॥
श्रुत्वा च वज्रमायान्तं पाटलीपुत्रपार्थिवः ।
तत्कालं सपरीवारो ऽभ्यगाद्भक्त्या गरिष्ठया ॥२५२॥
इतश्चेतश्च वज्रर्षेर्वृन्दीभूतान्महामुनीन् ।
ददर्शागच्छतो राजा राजमानांस्तपःश्रिया ॥२५३॥
दृष्ट्वा तांस्तु निदध्यौ च सर्वे ऽमी द्युतिशालिनः ।
सर्वे ऽपि मधुराकाराः सर्वे ऽपि विकसन्मुखाः ॥२५४॥
सर्वे प्रियंवदाः सर्वे करुणारससागराः ।
सर्वे ऽपि समताभाजः सर्वे ऽपि ममतोज्झिताः ॥२५५॥

---

249 b MSS. रुक्मिणी । d D बुभूर्षसि ।

को नाम वज्रस्वामीति न जानामि करोमि किम् ।
स एव भगवानादौ वन्द्यो गच्छस्य नायकः ॥२५६॥

॥ त्रिभिर्विशेषकम् ॥

पप्रच्छ च क्षणं स्थित्वा भगवन्तो महर्षयः ।
आख्यान्तु वज्रः किमयं किमेष किममाविति ॥२५७॥
मुनयः प्रोचिरे राजन्वज्रस्यान्तिपदो वयम् ।
मा चिन्तय तमस्मासु काकैः क ज्योतिरिङ्गणाः ॥२५८॥
एवं तु मुनिवृन्देषु पृच्छन्सर्वेषु भूपतिः ।
वज्रं ददर्श मोदाद्रिवज्रं पद्माङ्गण स्थितम् ॥२५९॥
वज्रभट्टारकमथ ववन्दे वसुधाधवः ।
किरीटरत्नांशुजलैस्तत्पादौ स्नपयन्निव ॥२६०॥
सुगन्धाक्षतगुणयायौ ऽप्युद्याने समवासरत् ।
आश्रित्य सपरीवारस्तरुच्छायामतिश्रयम् ॥२६१॥
महीनाथो ऽपि तत्पार्श्वे निषद्यायां निषेदुषः ।
पादावर्चयद्घनकर्दमेन सुगन्धिना ॥२६२॥
ततश्च भगवान्वज्रः सुधामधुरया गिरा ।
चकार देशनां मोहध्वान्तध्वंसैकदीपिकाम् ॥२६३॥
क्षीराश्रवलब्धिमतः श्रीवज्रस्वामिनस्तया ।
धर्मदेशनया राजा हृतचित्तो ऽभवत्तराम् ॥२६४॥
देशनान्ते मुनिं नत्वा राजा स्वसदनं ययौ ।
गता च सर्वेऽप्युद्यानं राज्ञीनामित्यचीकथन् ॥२६५॥
प्राग्दोषाने ज्ञाताधरो वज्रस्वाम्यपि सुभ्रुव ।

मयाद्य वन्दितो धर्मदेशनाक्षीरसागरः ॥२६६॥
तं वन्दित्वा च दृष्ट्वा च तस्य धर्मं निशम्य च ।
मम गात्रं च नेत्रे च श्रोत्रे चायुः कृतार्थताम् ॥२६७॥
इदमेव दिनं मन्ये दिनत्वेन सुलोचनाः ।
अभवद्यत्र वज्रर्षेर्भासमादित्यस्य दर्शनम् ॥२६८॥
एतावतापि धन्यो ऽस्मि दृष्टो वज्रमुनिर्मया ।
किं पुनस्तन्मुखाद्धर्ममश्रौषमहमार्हतम् ॥२६९॥
हे देव्यस्तद्यूयमपि वज्रर्षिं द्रष्टुमर्हथ ।
त्वरितं यात चपयो ऽनेकचक्षाः समीरवत् ॥२७०॥
राज्ञः प्रोचुः स्वयमपि तं विवन्दिषवो वयम् ।
त्वदाज्ञाप्यथ यदभूत्तन्नाम्ना तृषितैः सरित् ॥२७१॥
ततस्तानुज्ञया राज्ञो राज्ञ्यो वज्रविभूषितम् ।
याप्ययानाधिरूढास्तास्तदुद्यानवरं ययुः ॥२७२॥
वज्रमागतमाकर्ण्य रुक्मिण्यपि जनोक्तिभिः ।
तमेव चिन्तयन्त्यस्थादात्मानमिव योगिनी ॥२७३॥
द्वितीये वासरे रुक्मिण्युवाच पितरं निजम् ।
वज्रस्वाम्यागतो ऽत्रैष यं सुवृणोम्यहं सदा ॥२७४॥
तस्मै वज्रकुमाराय सम्प्रदत्स्वान्यथा तु मे ।
मरणं शरणं तात ग्रावणि रेखेव गौरियम् ॥२७५॥
आभिजात्यसखीं लज्जां विहायैवं ब्रवीमि यत् ।

---

267 b A तं धर्मं c तद्धर्मं B मद्धर्मं निशम्यच । d A D चायुः । 271 c d c ०भूत्तन्मात्राक्ष० । 274 a c द्वितीय । 275 d A ग्रावणोरेखे० D रेखेवगौर्व ।

तत्रेदं कारणं वज्रो मत्पुण्यैरयमागतः ॥२७६॥
एष प्रायेण न स्थास्नुर्यद्यथैवेह गच्छति ।
किं ज्ञायते कदाप्येति भूयो ऽप्युड्डीनपत्त्रिवत् ॥२७७॥
तस्मादलं विलम्बेन देहि वज्राय तात माम् ।
चिरकौमारदीनां मां पश्यन्किं न हि दूयसे ॥२७८॥
एवं धनो ऽतिनिर्बन्धादुपवज्रं निनाय ताम् ।
सद्यः स्नाता विवाहार्हसर्वालङ्कारभूषिताम् ॥२७९॥
पुञ्जा सममनैषीच्च धनकोटीरनेकशः ।
प्रलोभनं वरयितुर्यथा स्यादिति जातधीः ॥२८०॥
तदद्याह्नस्तने चाह्नि वज्रे कुर्वति देशनाम् ।
भक्तिमान्नागरलोकः परस्परमदो ऽवदत् ॥२८१॥
अहो वज्रस्य सौस्वर्यं यदीयां धर्मदेशनाम् ।
आकर्ण्यानन्दमग्नाना सुतृप्यन्त्येव जायते ॥२८२॥
श्रीवज्रस्वामिनः सर्वगुणरत्नमहोदधेः ।
गुणानुरूपं चेद्रूपं भवेदुच्येत तर्हि किम् ॥२८३॥
वज्रर्षिणा [illegible] नगरप्रवेशे रूपमात्मनः ।
मत्वा सङ्क्षिप्तमेवासीत्पुरक्षोभाभिशङ्कया ॥२८४॥
तदा च भगवान्वज्रस्तेषां भावं मनोगतम् ।
संलापं च ज्ञानयत्नेनाज्ञासीदतिशायिना ॥२८५॥
द्वितीये ऽह्नि च वज्रेण विचक्रे ऽनेकलब्धिना ।

277 a A स्थास्नुर्दे॰ B स्थास्नु॰ D स्थास्नुर्यं c स्थास्नुं । 281 a A तदप्योद्य॰ D तदोद्यद्ये । 282 a A D सौरस्यं । C D ॰ दृप्ति ।

सहस्रपत्त्रं कमलं कमलाविष्टरोपमम् ॥२८६॥
कृत्वा स्वाभाविकं रूपमद्भुतं तस्य चोपरि ।
निषीदति स्म भगवान्वज्रो राजमरालवत् ॥२८७॥
वज्ररूपं जनो दृष्ट्वा जितामरकुमारकम् ।
शिरांसि दुधुवे गीताभ्यासं विरचयन्निव ॥२८८॥
जजल्प च लोको वज्रस्य रूपं नैसर्गिकं ह्यदः ।
गुणाभासाकृतेश्चास्य सङ्गमो ऽभ्युत्तमागमः ॥२८९॥
मा भूवं प्रार्थनीयो ऽहं लोकस्येति हि शङ्कया ।
सामान्यं स्वतनं रूपं नूनं प्रभ्वेव निर्ममे ॥२९०॥
राजापि व्याजहारैवं विस्मयस्मेरमानसः ।
यथेष्टरूपनिर्माणलब्धिर्वज्रमुनिः खलु ॥२९१॥
धनश्रेष्ठ्यपि तद्वज्रस्वामिरूपं निरूपयन् ।
स्वां पुत्रीं वर्णयामास सायत्तां तत्स्वयंवरे ॥२९२॥
धनस्य हृदये स्वार्थप्रार्थनां कर्तुमिच्छतः ।
न वज्रदेशनाग्नौ ऽस्मादत्युत्तान इवोदकम् ॥२९३॥
देशनान्ते ऽवदद्वज्रं धनश्रेष्ठी कृताञ्जलिः ।
कृत्वा प्रसादं मत्पुत्रीमिमामुद्वह मानद ॥२९४॥
क्व भवानमराकारः क्वेयं मानुषकीटिका ।
उरीकुरु तथाप्येनां मद्वस्तु न वृथार्थना ॥२९५॥
विवाहानन्तरं वज्र हस्तमोचनपर्वणि ।
द्रव्यकोटीरसङ्ख्यातास्तुभ्यं दास्ये भवलदः ॥२९६॥

290 a C मा भूवं । 291 d C मुने ।

वज्रस्तमज्ञं विज्ञाय स्मित्वोचे करुणापरः ।
पर्याप्तं द्रव्यकोटीभिः पर्याप्तं कन्यया च ते ॥२९७॥
नितम्बिन्यो हि विषयास्ते पुनः स्युर्विषोपमाः ।
आपातमात्रमधुराः परिणामे ऽतिदारुणाः ॥२९८॥
विवेच्यमाना विषया विशिष्यन्ति विषादपि ।
जन्मान्तरेऽप्यनर्थाय ये भवन्ति शरीरिणाम् ॥२९९॥
ज्ञात्वा दुरन्तान्विषयान्कथमङ्गीकरोम्यमून् ।
ज्ञातैश्चौरैरसारो ऽपि गृहीतुं न हि शक्यते ॥३००॥
महानुभावा कन्या ते यदि मय्यनुरागिणी ।
प्रव्रज्यां तन्मयोपात्तामुपादत्तामसावपि ॥३०१॥
इयेष मामेव यदि कुलीना मनसाप्यसौ ।
तदेवं युज्यते कर्तुं परलोकहितेच्छया ॥३०२॥
विवेकपूर्वमथवानुज्ञयापि मदीयया ।
गृह्णात्वेषा परिव्रज्यां निर्वाणार्पणलग्निकाम् ॥३०३॥
विभीतकतरुच्छायामिवानर्थप्रदायिनीम् ।
मा कार्षीर्विषयासक्तिं त्वत्पुत्री वच्मि तद्धितम् ॥३०४॥
एवं भगवतो वज्रस्वामिनः पेशलोक्तिभिः ।
प्रतिबुद्धा प्रवव्राजाल्पकर्मा रुक्मिणी तदा ॥३०५॥
धर्मो ऽयमेव हि श्रेयान्यत्र निर्लोभतेदृशी ।
एवं विमृश्य बहवः *प्रतिबोधं जना ययुः* ॥३०६॥

298 a B आपात॰ C ॰पाप॰। D inserts after 300 तदा [illegible] (read [illegible]) । [illegible]

अन्यदा जन्मसंसिद्धपदानुसृतिलब्धिना ।
ततो भगवता वज्रस्वामिनाकाशगामिनी ॥३०७॥
महापरिज्ञाध्ययनादाचाराङ्गान्तरस्थिता ।
विद्योद्धृता भगवतः सङ्घस्योपचिकीर्षुणा ॥३०८॥ युग्मं ॥
बभाण वज्रो भगवाननया विद्यया मम ।
जम्बूद्वीपाक्रमणे ऽस्ति शक्तिरामानुषोत्तरम् ॥३०९॥
ममेयं धरणीयैव विद्या देया न कस्यचित् ।
अल्पर्द्धयो ऽल्पसत्त्वाश्च भाविनो ऽन्ये ह्यतः परम् ॥३१०॥
अन्यदा पूर्वदिग्भागाच्छ्रीवज्रो ऽगान्महामुनिः ।
सूर्यो मकरसङ्क्रान्ताविवापाच्या उदग्दिशम् ॥३११॥
तदा तत्र प्रववृते दुर्भिक्षमतिभीषणम् ।
बभूव भोजनश्रद्धानुबन्धविधुरो जनः ॥३१२॥
गृहिणामप्यदारिद्र्यादल्पभोजनकारिणाम् ।
बभूव नित्यमप्यूनोदरता यतिनामिव ॥३१३॥
संवत्सरे सत्त्रशाला गृहस्थैरीश्वरैरपि ।
सर्वत्राभूदविरलरङ्करोलाकुलेव भूः ॥३१४॥
रङ्का विक्रीयमाणानि दधिभाण्डानि चत्वरे ।
फोटं फोटं तद्दधीनि लिलिहुः कुक्कुरा इव ॥३१५॥
अस्थिचर्मावशेषाङ्गाः सुव्यक्तस्नायुमण्डलाः ।
रङ्काः सर्वत्र सञ्चेरुः परेता इव दारुणाः ॥३१६॥
अनगारेष्वतिथितामागतेष्वल्पतृष्णया ।
अदर्शयन्भिक्षादोषानुपेत्य श्रावका अपि ॥३१७॥

ग्रामेषु शून्यीभूतेषु विष्वग्निर्धूमधामसु ।
अभवत्पादसञ्चाराः पन्थानो ऽप्यभवन्खिलाः ॥३१८॥
ततश्च सकलः सङ्घो दुष्कालेन कदर्थितः ।
दीनो विज्ञपयामास सुनन्दानन्दनं मुनिम् ॥३१९॥
अस्मान्दुःखार्णवादस्मात्कथंचिदवतारय ।
सङ्घप्रयोजने विद्योपयोगो ऽपि न दुष्यति ॥३२०॥
ततश्च वज्रो भगवान्विद्याशक्त्या गरिष्ठया ।
पटं विचक्रे विपुलं चक्रभृच्चर्मरत्नवत् ॥३२१॥
श्रीवज्रस्वामिना सङ्घो निर्दिष्टः सकलस्तदा ।
पोते वणिक्सार्थ इवाधिरुरोह महापटे ॥३२२॥
वज्रर्षिणा भगवता विद्याशक्त्या प्रयुक्तया ।
उत्पुप्लुवे पटो व्योम्नि पवनेरितमेघवत् ॥३२३॥
तदा शय्यातरो दत्तनामा वज्रमहामुनेः ।
समाययौ नहचारिग्रहणार्थं गतो ऽभवत् ॥३२४॥
सङ्घेन सहितं वज्रस्वामिनं स्वर्गयायिनम् ।
निरीक्ष्य मूर्धजाग्मोघमुत्खायैवमुवाच सः ॥३२५॥
शय्यातरो ऽहं युष्माकमभवं भगवन्पुरा ।
अद्य साधर्मिको ऽप्यस्मि निस्तारयसि किं न माम् ॥३२६॥
शय्यातरस्य तां वाचं श्रुत्वोपालम्भगर्भिताम् ।
दृष्ट्वा च लूनकेशं तं वज्रः सचादमकरत् ॥३२७॥
ये साधर्मिकवात्सल्ये स्वाध्याये चरणे ऽपि वा ।
तीर्थप्रभावनायां चोद्युक्तास्तांस्तारयेन्मुनिः ॥३२८॥

आगमार्थमिमं स्मृत्वा वज्रस्वामिमहर्षिणा ।
पटे तस्मिन्नध्यरोपि सो ऽपि शय्यातरोत्तमः ॥३२९॥
विद्यापटोपविष्टास्ते यान्तः साद्रिसरित्पुराम् ।
सर्वे विलोकयामासुः करामलकवन्महीम् ॥३३०॥
भक्तिप्रह्वैः पूज्यमानो मार्गस्थव्यन्तरामरैः ।
द्योम्नि प्रदीयमानार्घो भक्तैर्ज्योतिषिकामरैः ॥३३१॥
विद्याधरैर्वर्ण्यमानः शक्तिसम्पच्चमत्कृतैः ।
आलिङ्ग्यमानः सुहृदेवानुकूलेन वायुना ॥३३२॥
पटच्छायादर्शितास्वच्छायासौख्यो महीस्पृशाम् ।
वन्दमानो नभःस्थो ऽपि मार्गचैत्यान्यनेकशः ॥३३३॥
पटस्थो ऽपि पटस्थेभ्यस्तन्वानो धर्मदेशनाम् ।
वज्रर्षिराससादाथ पुरीं नाम महापुरीम् ॥३३४॥
॥ चतुर्भिः कलापकं ॥

तस्यां धनकणाढ्यायां सुभिक्षमभवत्तदा ।
प्रायेण श्रावको लोको बुद्धभक्तस्तु पार्थिवः ॥३३५॥
तस्यां जैनाश्च बौद्धाश्च स्पर्धमानाः परस्परम् ।
चक्रिरे देवपूजादि जैनैर्बौद्धास्तु जिग्यिरे ॥३३६॥
जैना हि यद्यत्पुष्पादिपूजोपकरणं पुरे ।
ददृशुस्तत्तदधिकमूल्यदानेन चिक्रियुः ॥३३७॥
नाभूवन्बुद्धभक्तास्तु पुष्पाद्यादातुमीश्वराः ।
ततश्च बुद्धायतनेष्वभूत्पूजा तनीयसी ॥३३८॥

---

329 a D कृत्वा । 330 c D विलो° । 333 d D. मार्गं ।

बुद्धभक्तास्तु ते क्षीणा बुद्धभक्तं महीपतिम् ।
विज्ञप्य सर्वं पुष्पादि श्रावकाणां न्यवारयन् ॥३३९॥
पुष्पापणेषु सर्वेषु बहुमूल्यप्रदा अपि ।
अर्हद्भक्तास्ततः पुष्पवृन्तान्यपि न लेभिरे ॥३४०॥
उपस्थिते पर्युषणापर्वण्यर्हदुपासकाः ।
ततो रुदन्तो दीनास्या वज्रर्षिमुपतस्थिरे ॥३४१॥
ते श्रावका नेत्रजलैः क्लेदयन्तो महीतलम् ।
नत्वा व्यजिज्ञपन्वज्रं खेदगद्गदया गिरा ॥३४२॥
अर्हच्चैत्येष्वहरहः पूजादि द्रष्टुमक्षमैः ।
बौद्धैर्वयं पराभूता भूतैरिव दुरात्मभिः ॥३४३॥
विज्ञप्तो बौद्धलोकेन बौद्धो राजा न्यवारयत् ।
पुष्पाणि ददतोऽस्माकं मालिकानखिलानपि ॥३४४॥
लभामहे वयं नाथ नाग्रस्थिकुसुमान्यपि ।
किं कुर्मो द्रव्यवन्तोऽपि राजाज्ञां कोऽतिलङ्घते ॥३४५॥
तुलसीपर्णरोपूजापावर्ता ग्रामयक्षवत् ।
म्लायन्ति जिनबिम्बानि हहा किं जीवितेन नः ॥३४६॥
मार्हत्स्वारोपयन्त्वेते कुसुमानीत्यभिषण्डिलैः ।
बौद्धैः पुष्पं निषिद्धं नः केवलामलकेऽपि हि ॥३४७॥
किं चानिशं गणयतां स्वामिन्नस्माकमङ्गुलीः ।
आगात्पर्युषणापर्वेदिनं दिनसमापिका ॥३४८॥

339 c B C बुध्यादि ।

पर्वण्यप्यागते ऽस्मिन्वयं यतिवदर्हताम् ।
भावपूजां करिष्यामः पुष्पसम्पत्तिवर्जिताः ॥३४९॥
पराभूय पराभूय बौद्धैर्दुर्बुद्धिभिर्वयम् ।
जीवन्मृता इव कृताः स्वामिनि त्वयि सत्यपि ॥३५०॥
जिनप्रवचनस्याभिभूतस्यास्य प्रभावनाम् ।
विधाय भगवन्नस्मान्सञ्जीवयितुमर्हसि ॥३५१॥
समाश्वसित हे श्राद्धा यतिष्ये वः सुतेजसे ।
इत्युक्त्वा भगवान्व्योमन्युत्पपात सुपर्णवत् ॥३५२॥
स्वामी निमेषमात्रेणाथागान्माहेश्वरीं पुरीम् ।
अवातारीदुपवने चैकस्मिन्विस्मयावहे ॥३५३॥
हुताशनाभिधानस्य देवस्योपवनं च तत् ।
यो ऽभूदारामिकस्तत्र मित्रं धनगिरेः स तु ॥३५४॥
अकस्मादागतं वज्रं निरीक्ष्यानभ्रवृष्टिवत् ।
आरामिकः प्रगे प्रहस्ताञ्जितास्यो मुदावदत् ॥३५५॥
तिथिष्वतिथिषु धन्येयं यत्र त्वमतिथिर्मम ।
आत्मानं चाधुना धन्यं मन्ये ऽहं यत्स्मृतस्त्वया ॥३५६॥
दिष्ट्या सुखप्रवर्द्धे चिन्तात्रापलनस्त्वया ।
ममागास्त्वं यदतिथिः किमातिथ्यं करोमि ते ॥३५७॥
वज्रस्वाम्यप्यभिदधे मम ह्युद्यानपालक ।
पुष्पैः प्रयोजनं तानि प्रदातुं च त्वमीशिषे ॥३५८॥

---

352 b B C. सुचेतसे । 353 a C. माहेश्वर्या° । 355 d C प्रहृष्टमद् ।
357 a B C. चिरा° ।

मालाकारो ऽवदत्पुष्पादानेनानुगृहाण माम् ।
भवन्ति प्रत्यहं पुष्पलक्षा विंशतिरत्र हि ॥३५९॥
भगवानादिशत्तर्हि पुष्पाणि प्रगुणीकुरु ।
आगच्छाम इतो गत्वा यावदुद्यानरक्षक ॥३६०॥
एवमुक्त्वा पृषदश्व इवोत्पत्य विहायसा ।
अक्षुद्रः क्षुद्रहिमवद्गिरिं वज्रमुनिर्ययौ ॥३६१॥
गङ्गासिन्धुजलक्रीडाप्रसक्तसुरवारणम् ।
दशमाहृतकुण्डाभपद्मह्रदमनोरमम् ॥३६२॥
सदावन्दारुदिविषत्सिद्धायतनमण्डितम् ।
गायत्किंपुरुषीगीतानुचरैणकदम्बकम् ॥३६३॥
अनेकधातुमङ्गुमिश्रितसन्ध्याभ्रविभ्रमम् ।
भ्राम्यदुन्मत्तचमरीभम्भाभाङ्कारगह्वरम् ॥३६४॥
नमेरुभूर्जतगरकिम्पाकाकुलमेखलम् ।
स तं हिमाद्रिमद्राक्षीद्व्योमस्थो ऽम्य इवार्यमा ॥३६५॥

॥ चतुर्भिः कलापकम् ॥

स शाश्वतार्हत्प्रतिमाः सिद्धायतनवर्तिनीः ।
ववन्दे वन्द्यमानांह्रिर्विद्याधरकुमारकैः ॥३६६॥
तरङ्गरङ्गशालास्थलास्यलासकपङ्कजम् ।
पद्मसौगन्ध्यवहनादिव मन्थरमारुतम् ॥३६७॥
सञ्चरन्नीरजमिव क्रीडदप्सरसां मुखैः ।
उन्निद्रपङ्कजरजोधिवाससुभगोदकम् ॥३६८॥

---

363 d B C ०नुचारैण० A ०नुचरेण० । 364 d C ०भांकारि । 367 b C लाय A लासक C B लासस D लासव ।

श्रीदेवीदेवतागारमगायदमरीजनम् ।
पद्मह्रदं जगामाथ वज्रर्षिर्व्योमवर्त्मना ॥३६८॥
॥ त्रिभिर्विशेषकम् ॥

तदा च देवपूजार्थमवचित्यैकमम्बुजम् ।
श्रीदेव्या देवतागारं यान्त्या वज्रर्षिरैक्ष्यत ॥३७०॥
श्रीर्देवता ववन्दे तं दृष्टमात्रं मुनीश्वरम् ।
रत्नोष्णीषप्रभाम्भोभिः स्नपयन्तीव तत्क्रमौ ॥३७१॥
धर्मलाभाशिषं दत्त्वा तस्थिवांसं तु तं मुनिम् ।
बद्धाञ्जलिः श्रीरवददाज्ञापय करोमि किम् ॥३७२॥
जगाद वज्रो भगवानादिष्टमिदमेव ते ।
पाणिपद्मस्थितं पद्ममिदं पद्मे ममार्प्यताम् ॥३७३॥
स्वामिन्किमेतदादिष्टमिन्द्रोपवनजान्यपि ।
पुष्पाण्यानेतुमीशास्मीत्युक्त्वा सा पद्ममार्पयत् ॥३७४॥
वन्दितश्च श्रिया वज्रः पुनरुत्पत्य सत्वरम् ।
पथा यथागतेनैव हुताशनवनं ययौ ॥३७५॥
विद्याशक्त्या च भगवान्विमानं व्यकरोदथ ।
पालकस्यानुजन्मेव बन्धुरं विविधर्द्धिभिः ॥३७६॥
अस्थापयच्च तन्मध्ये श्रीदेव्यर्पितमम्बुजम् ।
विंशतिं पुष्पलक्षाणि तस्य पार्श्वेषु च न्यधात् ॥३७७॥
स्मरति स्म तदा वज्रो भगवाञ्जृम्भकामरान् ।
ते वज्रं वज्रिणमिव तत्क्षणाच्चोपतस्थिरे ॥३७८॥
तत्रस्थेवाम्बुजस्याधो धनगिर्यात्मभूर्मुनिः ।

निषद्य व्योमयानाय विमानवरमादिशत् ॥३७९॥
तस्मिन्विमाने चलिते जृम्भका अपि नाकिनः ।
चेलुर्विमानारूढास्ते गीतवाद्यादिपूर्वकम् ॥३८०॥
वैमानिकैर्विमानस्थैर्विमानस्थः समावृतः ।
पुरीं नाम पुरीं प्राप वज्रस्तां बौद्धदूषिताम् ॥३८१॥
तत्पुरीवासिनो बौद्धा विमानानि निरीक्ष्य खे ।
अभाषन्तैवमुत्पश्या उत्पुसुप्तोत्थिता इव ॥३८२॥
सप्रभावमहो बौद्धदर्शनं प्रेक्ष्य नाकिनः ।
बुद्धपूजार्थमायान्ति श्रीबुद्धाय नमो नमः ॥३८३॥
तेषां च वदतामेवं वज्रो ऽर्हत्सदनं ययौ ।
विमानैर्दर्शयन्व्योम्नि गान्धर्वनगरश्रियम् ॥३८४॥
पुनर्बौद्धैरभिदधे मषीधौताननैरिव ।
अहो अर्हद्दर्शने ऽभूदियं दैवी प्रभावना ॥३८५॥
चिन्तितमन्यथास्माभिरन्यथेदमुपस्थितम् ।
दृष्टिः प्रसारिताप्यस्माद्वायुना नीतमञ्जनम् ॥३८६॥
ततः पर्युषणापर्वण्यर्हदायतने ऽमरैः ।
महीयान्महिमाकारि भूस्पृशां यो न गोचरः ॥३८७॥

जृम्भकामरकृतां प्रभावनाम्
अर्हतो भगवतो निरीक्ष्य ताम् ।
बौद्धभावमपहाय पार्थिवः
सप्रजो ऽपि परमार्हतो ऽभवत् ॥३८८॥

इत्याचार्यश्रीहेमचन्द्रविरचिते परिशिष्टपर्वणि स्थविरावलीचरिते महाकाव्ये वज्रस्वामिजन्ममतप्रभाववर्णनो नाम द्वादशः सर्गः ॥

# CANTO XIII.



इतश्चौद्रायणनृपो जज्ञे दशपुरे पुरे ।
सोमदेवो ऽभवद्विप्रो रुद्रसोमा तु तत्प्रिया ॥१॥
ब्राह्मणी रुद्रसोमा सा बभूव परमार्हती ।
दयादिभिर्गुणैर्धर्मैर्द्रुमबीजैरलङ्कृता ॥२॥
तयोरजनिषातां द्वौ तनयौ नयशालिनौ ।
मान्नार्यरक्षितो ज्यायान्कनीयान्फल्गुरक्षितः ॥३॥
तत्रार्यरक्षितो मौञ्जीबन्धनादप्यनन्तरम् ।
अधीयाय पितुरेव सकाशे यद्विवेद सः ॥४॥
ततो ऽनुज्ञाप्य पितरावध्येतुमधिकाधिकम् ।
पाटलीपुत्रनगरे प्रययावार्यरक्षितः ॥५॥
सो ऽङ्गानि वेदांश्चतुरो मीमांसान्यायविस्तरम् ।
पुराणं धर्मशास्त्रं च तत्राधैष्ट विशिष्टधीः ॥६॥
चतुर्दशापि हि विद्यास्थानानि निजनामवत् ।
कृत्वा कण्ठगतान्यागात्पुरं दशपुरं पुनः ॥७॥
चतुर्वेदो ऽयमायातः पूज्य इत्यवनीभुजा ।
अधिरोह्य करिस्कन्धे स प्रावेश्यत पत्तने ॥८॥
विविधोपायनकरा लोका अपि समभ्ययुः ।
राजभिः पूज्यते यो हि पूजनीयो न कस्य सः ॥९॥

---

1 a D ०नद्दा० । 6 a A घोगाणि, C D घांगाणि ।

गृहस्य बाह्यशालायामध्युवासार्यरक्षितः ।
कुटुम्बे दददानन्दसम्पदामिव नूतनम् ॥१०॥
तं ब्रह्मचर्यसधनं पूज्यमानं महीभुजा ।
दृष्ट्वा तद्बान्धवा गोत्रं पवित्रं मेनिरे निजम् ॥११॥
स्वजनैस्तद्गृहद्वारे रम्यमाबन्धि तोरणम् ।
चिरेष्टायाः समेयुष्या लीलादोलोपमं श्रियः ॥१२॥
तद्गृहे तत्सुवासिन्यः स्वस्तिकान्स्वस्तिकारकान् ।
लिलिखुस्तद्गुणाख्यानप्रशस्त्यक्षरसन्निभान् ॥१३॥
बाह्यावासस्थितो ऽप्यार्यरक्षितो ऽल्पैर्दिनैरपि ।
श्रीमान्बभूव भूयोभिरागच्छद्भिरुपायनैः ॥१४॥
अन्यदा चिन्तयामास शुद्धधीरार्यरक्षितः ।
अहो प्रमादो नाद्यापि जननीमभिवादये ॥१५॥
भवन्ति पुत्ररूपेण बाह्याः प्राणा हि योषिताम् ।
तत्प्रवासजं दुःखं तासामति हि दुःसहम् ॥१६॥
मत्प्रवासेन मन्माता भविष्यति कथं हि सा ।
निद्रायामपि या नित्यं मत्पार्श्वाचरगामिनी ॥१७॥
इदमेव हि धीरत्वमहो मन्मातुरद्भुतम् ।
अपि देशान्तरे प्रैषीद्या मां मद्धितकाम्यया ॥१८॥
तद्गुणोपार्जनामूलां सम्पदं दर्शयन्निजाम् ।
आनन्दयामि तामम्बामुत्कण्ठाम्भस्तरङ्गिणीम् ॥१९॥

---

13 a C तत्सुवासिन्यः । 16 d A C दुःखद ।

इत्यार्यैरर्चितः सद्यो दिव्ये संवीय वाससी ।
कश्मीरजाङ्गरागेण संवर्मितवपुर्द्युतिः ॥२०॥
सुगन्धिसुमनोदामगर्भिताबद्धकुन्तलः ।
ग्रीवापार्श्वद्विविन्यस्तकार्तस्वरविभूषणः ॥२१॥
कर्पूरफालिकामिश्रताम्बूलकटभाननः ।
विशदच्छत्रमश्रीकमौलिः स्वसद्मं ययौ ॥२२॥
॥ त्रिभिर्विशेषकम् ॥

स आदावेव विनयी मातुः पादानवन्दत ।
कण्ठावलम्बिसौवर्णशृङ्खलाश्लिष्टभूतलः ॥२३॥
दीर्घायुस्त्वयो भूयाः स्वागतं तव दारक ।
इत्युक्ता सावदन्यानिवेश्मिकौवापरं न हि ॥२४॥
स पुत्रप्रेमसंरम्भोचितसंलापलक्षणम् ।
प्रसादं पूर्ववन्मातुरपश्यन्निदमब्रवीत् ॥२५॥
अधीताशेषविद्यो ऽहं त्वत्पादान्द्रष्टुमागमम् ।
किं नालपसि मां भक्तिमर्यादामकराकरम् ॥२६॥
मम पूजां करोत्येष राजा राजगुरोरिव ।
महिमानमिमं सूनोर्दृष्ट्वा किं न हि हृष्यसि ॥२७॥
रुद्रसोमावदद्भद्र किं विद्योपार्जनेन ते ।
हिंसोपदेशकं ह्येतदधीतं नरकप्रदम् ॥२८॥
दृष्ट्वा नरकपाताभिमुखं त्वां दुःखितमभवम् ।

---

21 a D sec. manu. ॰फलिका ।

कथं रंस्यामि मग्नास्मि खेदे गौरिव कर्दमे ॥२९॥
यदि त्वं मयि भक्तोऽसि यदि मां मन्यसे हिताम्।
दृष्टिवादं तदधीष्व हेतुं स्वर्गापवर्गयोः ॥३०॥
इत्यार्यरक्षितो दध्यौ किमधीतमिदं मया।
न यन्मातुः प्रमोदाय तज्ज्ञया सम्पदापि किम् ॥३१॥
विमृश्यैवमुवाचाम्बामार्यधीरार्यरक्षितः।
दृष्टिवादं पठिष्यामि मातराख्याहि तद्गुरुम् ॥३२॥
रुद्रसोमावदद्वत्स श्रमणोपासको भव।
दृष्टिवादस्य गुरवः श्रमणा एव नापरे ॥३३॥
दृष्टिवादो हि दर्शनविचार इति शोभनम्।
मामाप्यस्येति मनसि श्रद्धावार्यरक्षितः ॥३४॥
ऊचे च मातुरादेशः प्रमाणं गुरवस्तु ते।
क्व द्रष्टव्या दृष्टिवादं यथाधीये तदन्तिके ॥३५॥
रुद्रसोमापि तनयविनयोच्छ्वसिता सती।
भ्रमयन्यसलं तस्य निजगाद प्रमादभाक् ॥३६॥
इदानीं हि न जिह्रेमि त्वयाह तनुजन्मना।
मदादेशमनुष्ठातुं यदकार्षीर्मनोरथम् ॥३७॥
सन्ति तोसलिपुत्राख्या आचार्या आर्यरक्षित।
इतो ममैवेक्षुवाटे प्रतिपन्नप्रतिश्रयाः ॥३८॥
तत्पादपङ्कजोपास्तिदक्षतामुररीकुरु।
ते त्वामध्यापयिष्यन्ति दृष्टिवादं तनूद्भव ॥३९॥
एवं प्रातः करिष्यामीत्यभिधायार्यरक्षितः।

दृष्टिवादाभिधां ध्यायन्नाशेत रजनावपि ॥४०॥
प्रातश्चचाल पृष्ट्वाम्बामार्यरक्षितकुम्भभूः ।
दृष्टिवादोदधिं प्राज्ञः पातुं गण्डूषलीलया ॥४१॥
पितृमित्रमितश्चार्यरक्षितस्य महाद्विजः ।
अभूद्दुपपुरं ग्रामे पितेवात्यन्तवत्सलः ॥४२॥
सोऽचिन्तयन्मया ह्यो दृष्टो न ह्यार्यरक्षितः ।
आयुष्मन्तं तदद्यापि तं पश्यामि सुहृत्सुतम् ॥४३॥
इति द्विजाग्रणीरिक्षुयष्टीः स सकला नव ।
तत्खण्डं चैकमादायार्यरक्षितमठं ययौ ॥४४॥
सोमदेवसुतं ज्येष्ठं निर्यान्तं च निकेतनात् ।
ददर्शैष द्विभातत्वात्तमुपालक्षयन्न च ॥४५॥
को नाम त्वमसीत्युक्तः सोऽपृच्छदार्यरक्षितम् ।
आर्यरक्षित एषोऽस्मीत्यब्रवीदार्यरक्षितः ॥४६॥
द्विजो जगाद हे भ्रातः पुत्र ह्यस्तनवासरे ।
कुटुम्बकृत्यकरणप्रमादान्नासि वीक्षितः ॥४७॥
एकेनापि गतेनाह्ना मन्ये गतमहःशतम् ।
यत्र त्वां नाहमद्राक्षं हृत्कैरवनिशाकरम् ॥४८॥
इत्यार्यरक्षितं प्रेम्णा द्विजन्मा परिरभ्य सः ।
अवोचदिक्षवो ह्येते मयानीयन्त त्वत्कृते ॥४९॥
उवाच सोमभूरिक्षूंस्तात मन्मातुरर्पयेः ।

---

42 d c अभूद्दुपदुर, D ॰पषर, B ॰षुपुरे । 43 b D त्वार्यरक्षितः । 45 c C द्विभाव॰ ।

अहं शरीरचिन्तार्थं गच्छन्नस्मि बहिर्भुवि ॥५०॥
इदं च मातुराख्याया यद्गच्छन्नार्यरक्षितः ।
अधुनेक्षुलतापाणिमद्राक्षीदादितो ऽपि माम् ॥५१॥
इत्यार्यरक्षितेनोक्तः स द्विजन्मा तथाकरोत् ।
आर्यरक्षितमातापि सा ह्येवमचिन्तयत् ॥५२॥
मम सूनोरिदं श्रेयोऽभूच्छकुनमतश्च सः ।
नव पूर्वाणि खण्डं च नूनमादास्यते सुधीः ॥५३॥
नवार्धं दृष्टिवादस्य पूर्वाण्यध्ययनानि वा ।
दशमं खण्डमध्येष्ये दध्यौ यानिति सोमभूः ॥५४॥
गत्वा चेक्षुगृहद्वारे स्थिरधीरार्यरक्षितः ।
अचिन्तयदविज्ञातः कथमन्तर्विशाम्यहम् ॥५५॥
राज्ञामिव गुरूणां हि सन्निधाने यतस्ततः ।
विदितो ऽपि नोपसर्पेदहं तु विदितो ऽपि न ॥५६॥
तदत्रैव क्षणं स्थित्वा वषत्यन्तर्विशाम्यहम् ।
प्रातर्वन्दनकायातश्रमणोपासकैः सह ॥५७॥
इत्यार्यरक्षितस्तस्थौ द्वारे ऽपि द्वारपालवत् ।
विदुषां रभसारम्भे विवेको ह्यर्गलायते ॥५८॥
मालवकैशिकीमुख्यग्रामरागपरिस्पृशा ।
स्वाध्यायेनापि साधूनां स ययौ लयमेणवत् ॥५९॥
तत्रागाड्ढड्ढरो नाम श्रमणोपासकः सगे ।

---

51 a A °राद्धेयं । 60 d C °रागपरिचितः ।

वन्दनाय महर्षीणां हर्षोत्फुल्ललोचनः ॥६०॥
स चिन्नैषेधिकीं कुर्वन्प्रविवेश प्रतिश्रयम् ।
अथैर्यापथिकीं प्रत्यक्रामदुच्चैस्स्वरस्वरम् ॥६१॥
तदनन्तरमाचार्यान्साधूनपि यथाविधि ।
वन्दित्वा निषसादाग्रे विष्टरं प्रतिलिख्य सः ॥६२॥
अथार्यरक्षितो धीमांस्तेन सार्धं प्रविश्य सः ।
वन्दनैर्यापथिक्यादि तस्माच्छ्रुतमधारयत् ॥६३॥
तद्दर्शितविधिं चाभिमयम्पठनपूर्वकम् ।
अवन्दताचार्यपादान्साधूनप्यार्यरक्षितः ॥६४॥
ढड्ढरश्रावकं त्वार्यरक्षितो न ह्यवन्दत ।
सुधीरपि गिराम्नायं कियद्विज्ञातुमीश्वरः ॥६५॥
निपुणं सोमतनयं तमवन्दितढड्ढरम् ।
आचार्या विविदुः को ऽपि श्राद्धो ऽयं नूतनः खलु ॥६६॥
धर्मलाभाशिषं दत्त्वा शरदम्भोमलाशयाः ।
पृच्छन्ति स्म तमाचार्याः कुतो धर्मागमस्तव ॥६७॥
श्रीरक्षे रुद्रसोमाया स जगाद यथातथम् ।
श्रमणोपासकाद्स्माद्दात्तधर्मो ऽस्मि नान्यतः ॥६८॥
ऊचिरे साधवो ऽप्येवं भगवन्नार्यरक्षितः ।
तनयो रुद्रसोमाया विद्वान्वेदाब्धिपारगः ॥६९॥
चतुर्दशविद्यास्थानोपाध्यायः पृथिवीभुजा ।
करिस्कन्धाधिरूढो ऽयं पत्तने ऽस्मिन्प्रवेशितः ॥७०॥
अयमाद्यगुणस्थानस्थितानां धुरि गण्यते ।

आस्थयैं श्रावकाचारं परिस्पृशति किं हृदः ॥७१॥
अथार्यरक्षितः स्माह श्रावको ऽस्मि हि सम्प्रति ।
किं नवो न भवेद्भावपरिणामः शरीरिणाम् ॥७२॥
इति विज्ञपयामास चाचार्यान्रचिताञ्जलिः ।
दृष्टिवादाध्यापनेन भगवंस्त्वं प्रसीद मे ॥७३॥
मया विवेकहीनेनोन्मत्तेनेव दुरात्मना ।
हिंसोपदेशकं सर्वमधीतं नरकावहम् ॥७४॥
आचार्या अपि तं शान्तं योग्यं ज्ञात्वैवमूचिरे ।
यदि त्वं दृष्टिवादाधिजिगांसुस्तत्परिव्रज ॥७५॥
किं चान्यदप्युपात्तायां प्रव्रज्यायां द्विजोत्तम ।
दृष्टिवादं क्रमेण त्वं विद्वन्नध्यापयिष्यसे ॥७६॥
सो ऽप्युवाच परिव्रज्यामिदानीमपि दत्त मे ।
मया न दुष्करा ह्येषा मन्मनोरथकामधुक् ॥७७॥
किं तु प्रसादं कुर्वाणैर्भगवद्भिर्निजे शिशौ ।
विहारक्रमशः कष्टमादृत्यान्यत्र गम्यताम् ॥७८॥
मामत्र स्थितवन्तं हि राजा पुरजनो ऽपि च ।
अत्यन्तमनुरागेण प्रव्रज्यां त्याजयेदपि ॥७९॥
आचार्या अपि तस्योपरोधेन सपरिच्छदाः ।
ययुरन्यत्र सो ऽप्यापे स्थितो याति स्म शैत्यवत् ॥८०॥
तीर्थे श्रीवर्धमानस्य तदानीमनगारिणाम् ।
शिष्यचौर्यव्यवहारः प्रथमो ऽयमवर्तत ॥८१॥

75 c MSS यदिदं, B prima manu त्वं।

तदार्यरक्षितं भद्रमाचार्यो पर्यविव्रजन् ।
साक्षीकृतगुरुस्वाम्युद्गृहीतार्थः सो ऽचिरादपि ॥८२॥
तप्यमानस्तपस्तीव्रं सहमानः परीषहान् ।
मातृकावदधीयाय सो ऽङ्गान्येकादशापि हि ॥८३॥
तेषामाचार्यमिश्राणां दृष्टिवादः परिस्फुटः ।
यावानभूव तावन्तमध्यैदार्यरक्षितः ॥८४॥
तदा बहुजनोक्त्यैवमश्रौषीदार्यरक्षितः ।
यद्भूयान्दृष्टिवादो ऽस्ति वज्रार्यैः साम्प्रतं स्फुटम् ॥८५॥
अभूच्च समवसृतः पुर्यां वज्रमुनिस्तदा ।
इति प्रतस्थे तत्रैव गन्तुं सोमात्मजो मुनिः ॥८६॥
ययौ चोज्जयिनीमध्ये भगवानार्यरक्षितः ।
भद्रगुप्ताभिधानानामाचार्याणां प्रतिश्रयम् ॥८७॥
गुणवन्तं तपोराशिं पूर्वावस्थाकुतीर्थिकम् ।
उपलक्ष्य तमाचार्याः परिषस्वजिरे मुदा ॥८८॥
जगदुश्च वत्स धन्यो ऽसि कृतार्थो ऽसि सुधीरसि ।
विहाय यो हि साम्राज्यं श्रामण्यं प्रत्यपद्यथाः ॥८९॥
अद्याहं क्षीणशेषायुःकर्मा त्वामर्थये ऽनघ ।
कर्तुकामो ऽस्म्यनशनं मम निर्यामको भव ॥९०॥
तथेति प्रतिपेदानं रुद्रसोमात्मजं मुनिम् ।
विहितानशनो भद्रगुप्ताचार्यो ऽभ्यधादिति ॥९१॥

---

83 d A षोडा॰ C भांडा॰ ॰दशान्यपि ।

मा वज्रस्वामिना सार्धं वसेरेकप्रतिश्रये ।
किं तु वत्स त्वमन्यस्मिन्नधीयीथाः कृतस्थितिः ॥९२॥
यो हि सोपक्रमायुष्को वज्रेण सह यामिनीम् ।
एकामपि वसेत्सो ऽनुम्रियते तं न संशयः ॥९३॥
एवं करिष्ये ऽहमिति प्रतिपद्यार्यरक्षितः ।
तेषां निर्यामणां कृत्वा पुरीं वज्राश्रितां ययौ ॥९४॥
नगर्यां बहिरेवास्थात्तां निशामार्यरक्षितः ।
निशाशेषे स्वप्नमनु वज्रस्वामी ददर्श च ॥९५॥
यदद्य पयसा पूर्णः केनाप्यस्मत्पतद्ग्रहः ।
अपाय्यागन्तुना भूरि किंचिदस्थाच मत्पयः ॥९६॥
वज्रस्वामी महर्षीणां स्वप्नार्थं व्याकरोत्प्रगे ।
बहुपूर्वश्रुतपाठी को ऽप्येष्यति ममातिथिः ॥९७॥
स उपादास्यते ऽस्मत्तो बहुपूर्वश्रुतं सुधीः ।
पूर्वश्रुतावशेषं तु मत्पार्श्वे ऽपि रक्षिष्यति ॥९८॥
उपवज्रमुनि प्रातराययावार्यरक्षितः ।
ववन्दे द्वादशावर्तवन्दनेन च तं गुरुम् ॥९९॥
तं च पप्रच्छ वज्रर्षिः कुत आगाः स चावदत् ।
तोसलिपुत्राचार्याणां पादमूलादिहागमम् ॥१००॥
वज्रस्वाम्यब्रवीदार्यरक्षितस्त्वं किमाख्यया ।
सो ऽप्याख्यादेवमिति च पुनर्वन्दनपूर्वकम् ॥१०१॥

---

93 J C नात्र संशयः ।

वज्रस्वाम्यपि तं ज्ञात्वा सप्रसादमदोऽवदत् ।
स्वागतं तव कुत्र त्वं प्रतिश्रयमशिश्रियः ॥१०२॥
बहिरावासितोऽस्मीति तेनोक्ते स्वाम्यदोऽवदत् ।
महात्मन्किं न जानासि बहिःस्थोऽध्येष्यसे कथम् ॥१०३॥
सोमभूरभिधत्ते स्म स्वामिन्भिन्ने प्रतिश्रये ।
उदतारिषमाचार्यभद्रगुप्तानुशासनात् ॥१०४॥
उपयोगेन वज्रर्षिर्विदित्वैवमुवाच च ।
युक्तमेतद्धि पूज्यास्ते स्थविरा नाज्ञरन्यथा ॥१०५॥
वज्रोऽथ पृथगावासस्थितमप्यार्यरक्षितम् ।
अध्यापयितुमारेभे पूर्वाणि प्रतिवासरम् ॥१०६॥
अचिरेणापि कालेन सोमदेवभवो मुनिः ।
पूर्वाण्यपूर्वप्रतिभो नवाधीयाय लीलया ॥१०७॥
दशमं पूर्वमध्येतुं प्रवृत्तं चार्यरक्षितम् ।
दशमपूर्वयमकान्यधीष्वेत्यादिशद्गुरुः ॥१०८॥
ततो दशमपूर्वस्य बहूनि विषमाणि च ।
अध्येतुं यमकान्यार्यरक्षितर्षिः प्रचक्रमे ॥१०९॥
इतश्च सन्दिदिशतुः पितरावार्यरक्षितम्
नागच्छसि किमद्यापि विस्मृतास्तव किं वयम् ॥११०॥
त्वं नः करिष्यस्युद्योतमिति ध्यायामहम्महि ।
तवानागमने सर्वं पश्यामस्तु तमोमयम् ॥१११॥

---

111 d A D C तमो वयं।

एवमाहूयमानो ऽपि सन्देशवचनैस्तयोः ।
यावदध्ययनासक्तो ववले नार्यरचितः ॥११२॥
तावत्ताभ्यां तमाक्रान्तुमनोभ्यां फल्गुरक्षितः ।
प्राणप्रियो ऽनुजस्तस्य प्रैषि निर्बन्धशालया ॥११३॥ युग्मम्॥
द्रुतं गत्वा च नत्वा च सो ऽवादीदार्यरक्षितम् ।
किमेवं कठिमो ऽभूस्त्वमनुत्कण्ठः कुटुम्बके ॥११४॥
वैराग्यपशुना छिन्नं यद्यपि प्रेमबन्धनम् ।
तथापि तव कारुण्यमस्ति स्वस्तिनिबन्धनम् ॥११५॥
शोकपङ्कनिमग्नो ऽस्ति बन्धुवर्गस्य साम्प्रतम् ।
तदागत्य तमुद्धर्तुं भगवंस्तव साम्प्रतम् ॥११६॥
इति तेनानुजेनोक्तो गन्तुं तथार्यरक्षितः ।
श्रीवज्रस्वामिनं नत्वा पप्रच्छ स्वच्छमानसः ॥११७॥
अधीष्वेति ततस्तेन प्रत्युक्तः स पुनः पठन् ।
किं ते ऽस्ति विलम्बः फल्गुरक्षितेनेत्यभण्यत ॥११८॥
बान्धवाश्च परिभ्रश्यामनोरथरथस्थिताः ।
न कुत्रापि प्रवर्तन्ते त्वया सारथिना विना ॥११९॥
तदेहि देहि प्रव्रज्यां जगत्पूज्यां स्वगोत्रिणाम् ।
श्रेयस्यपि सकर्णो ऽपि किमद्यापि प्रमाद्यसि ॥१२०॥
अथार्यरक्षितः प्राह यदि सत्यमिदं वचः ।
ततस्त्वं तावदादत्स्व व्रतं मत्प्रदितं व्रतम् ॥१२१॥

---

114 c C कठिनो । 119 a परिभ्रष्टा ।

एवमुक्तस्ततस्तेन श्रद्धानिर्धौतमानसः ।
सो ऽवदद्देहि को हि स्यात्पीयूषस्य पराङ्मुखः ॥१२२॥
अथार्यरक्षितः प्रीतस्तस्यामृतकिरा गिरा ।
स्वयं तमनुजग्राह दीक्षया शिक्षयापि च ॥१२३॥
यातुमुक्तो ऽन्यदा फल्गुरक्षितेनार्यरक्षितः ।
अधीताशेषयमको गन्तुमूचे पुनर्गुरुम् ॥१२४॥
प्राग्वन्निवारितस्तेन स खेदादित्यचिन्तयत् ।
स्वजनाज्ञानदुर्बोधग्रामकूटे पतितो ऽस्मि हा ॥१२५॥
अधीयानः पुनः प्राग्वद्यमकेभ्यः पराजितः ।
कृताञ्जलिपुटो भूत्वा गुरुं नत्वा च सो ऽब्रवीत् ॥१२६॥
दशमस्यास्य पूर्वस्य मयाधीतं कियत्प्रभो ।
अवशिष्टं कियच्चेति सप्रसादं समादिश ॥१२७॥
जगाद गुरुरप्येवं स्मितविस्फुरिताधरः ।
बिन्दुमात्रं त्वयाधीतमब्धितुल्यं [illegible] शिष्यते ॥१२८॥
इति श्रुत्वा गुरोर्वाचमूचिवानार्यरक्षितः ।
परिश्रान्तो ऽहमध्येतुं प्रभुर्नातः परं प्रभो ॥१२९॥
शेषमप्यचिरेणापि त्वमागमयसि श्रुतम् ।
धीमन्नधीष्व धीरो ऽसि किमकाण्डे विषीदसि ।१३०॥
एवमाश्वासितस्तेन गुरुणा करुणावता ।
पुनः प्रवृत्तः सो ऽध्येतुं भग्नोत्साहो ऽपि भक्तिमान्॥१३१॥ युग्मम्॥

---

124 a C जातु।

फल्गुरक्षितमन्येद्युर्मूर्तिमद्बन्धुवाचिकम् ।
दर्शयन्नुत्सुको गन्तुं श्रीवज्रं स पुनर्जगौ ॥१३२॥
अयमुत्साह्यमानो ऽपि हन्त गन्तुमनाः कथम् ।
एवं विचिन्तयन्वज्रस्तस्याभूदुपयोगवान् ॥१३३॥
सो ऽयामंस्तेत्यतो यातो नायमायास्यति ध्रुवम् ।
स्तोकं ममायुर्मय्येव पूर्वं च दशमं स्थितम् ॥१३४॥
अनुज्ञातस्ततस्तेन गमनायार्यरक्षितः ।
सफल्गुरक्षितः शीघ्रं पुरं दशपुरं ययौ ॥१३५॥
तत्रायातं च तं ज्ञात्वा सपौरः पृथिवीपतिः ।
सरुद्रसोमः सोमश्च भक्त्या वन्दितुमाययौ ॥१३६॥
प्रमोदाश्रुपयःपूर्णलोचनास्ते च तं मुनिम् ।
मूर्तं धर्ममिवानम्य यथास्थानमुपाविशन् ॥१३७॥
विदित्वा धर्मशुश्रूषां तेषां कारुण्यवारिधिः ।
देशनां विदधे सो ऽपि मेघगम्भीरया गिरा ॥१३८॥
श्रोत्रपत्रपुटीपीतदेशनात्यच्छवारिभिः ।
तत्कालं क्षालयन्ति स्म विस्मितास्ते मनोमलम् ॥१३९॥
अथार्यरक्षितस्यान्ते नृपः सम्यक्त्वमग्रहीत् ।
ततः सपौरस्तं नत्वा ययौ निजनिकेतनम् ॥१४०॥
ससोमा रुद्रसोमापि बन्धुभिर्बहुभिः समम् ।
संसारकारावासविरक्ता व्रतमाददे ॥१४१॥

---

131 c C °स्तेन ।

इतश्च विहरन्वज्रस्वामी क्षोणितले क्रमात् ।
संयमक्रमचारी च प्रययौ दक्षिणापथम् ॥१४२॥
तमानन्दमहाकन्दकन्दलोद्भेदवारिदम् ।
संवीक्ष्य दाक्षिणात्यो ऽभूल्लोकः केकीव हर्षभाक् ॥१४३॥
द्योतयन्वस्तुतत्त्वानि मुनिः किमयमर्यमा ।
धत्ते कुमुदकोराणां प्रीतिं किमुत चन्द्रमाः ॥१४४॥
किमस्मत्कर्ममाहात्म्याद्धर्मो वा दृष्टदर्शनः ।
एवं तद्वीक्षणानन्दनिमग्ना जगदुर्जनाः ॥१४५॥ युग्मम् ॥
श्रीवज्रस्वामिनो ऽन्येद्युः श्लेष्मबाधाभवद्भृशम् ।
ततः शुण्ठीं समानेतुं स साधुं कंचनाभ्यधात् ॥१४६॥
साधुनानीय दत्तां च शुण्ठीमशठचेतसा ।
भुक्त्वानां भक्षयिष्यामीत्यतः कर्णे न्यधत्त सः ॥१४७॥
भोजनान्ते स कर्णान्तर्वर्तिनीं व्रतिनां पतिः ।
स्वाध्यायध्यानविवशो विसस्मार तथैव ताम् ॥१४८॥
ततः प्रदोषे सा तस्य प्रतिक्रमणकर्मणि ।
मुखवस्त्रिकया कायं प्रत्युपेक्षयतो ऽपतत् ॥१४९॥
पतितां तां च स्वाकूत्यास्मरदज्ञो मुनीशताम् ।
हा हा धिग्धिक् प्रमादो ऽयं ममेति स्वं निनिन्द च ॥१५०॥
प्रमादे संयमो न स्यान्निष्कलङ्कः कथंचन ।
तं विना मानुषं जन्म जीवितं च निरर्थकम् ॥१५१॥

---

146 b D °संघेर। 148 a C कर्णान्ते। 150 d A D मुनीशिता।
51 d C D कथंचनः।

सुर्मस्ततो वपुस्त्यागं वज्रस्वामीत्यचिन्तयत् ।
अजायत समन्ताच्च दुर्भिक्षं द्वादशाब्दकम् ॥१५२॥
लक्षमूल्योदनाद्भिक्षां यत्राह्नि लभताप्नुयाः ।
सुभिक्षमनुबुध्येथास्तदुत्तरदिनोषसि ॥१५३॥
एवमादि समादिश्य स्वशिष्यं श्रुतपारगम् ।
वज्रसेनमुनिं प्राह विहर्तुमथ सो ऽन्यतः ॥१५४॥ युग्मम् ॥
ग्रामाकरपुरारण्यवतीं वसुमतीं ततः ।
विहर्तुं वज्रसेनो ऽपि प्रावर्तत मुनिपुङ्गवः ॥१५५॥
श्रीवज्रस्वामिनः पार्श्ववर्तिनो व्रतिनः पुनः ।
लभन्ते न कचिद्भिक्षां भ्राम्यन्तो ऽपि गृहे गृहे ॥१५६॥
विना भिक्षां क्षुधाक्षामकुक्षयो ऽक्षमास्ततः ।
ते ऽन्वहं गुरुभिर्दत्तं विद्यापिण्डमभुञ्जत ॥१५७॥
द्वादशाब्दानि भोक्तव्यः पिण्डो ऽयं वस्तुतो यदि ।
संयमस्य न बाधास्ति तमाहृत्य ददाम्यहम् ॥१५८॥
नो वा तदा महानेन तनोस्त्यागं विदध्महे ।
इत्युक्ता गुरुभिर्धर्ममतयो यतयो ऽभ्यधुः ॥१५९॥ युग्मम् ॥
धिक् पोषणमिमं पिण्डं पिण्डं पोष्यमिमं च धिक् ।
प्रभो प्रसीद येनैतत्त्यजामो द्वितयं वयम् ॥१६०॥
अथादाय मुनीन्सर्वाञ्छ्रीवज्रो भुवनार्यमा ।
गिरिं प्रत्यचललोकान्तरं द्योतयितुं ययौ ॥१६१॥

---

153 a B मूल्यौदन, b C वपरि, c B ॰बध्येथ॰ । 154 c D वज्र prima manu.

तत्रैकः क्षुल्लको नास्थाद्वार्यमाणो यदा तदा ।
क्वापि प्रतार्य तं ग्रामे समारोहद्गुरुर्गिरिम् ॥१६२॥
माभूद्गुरूणामप्रीतिर्मनसीति विचिन्तयन् ।
त्यक्त्वा भक्तं च देहं च क्षुल्लको ऽस्थाद्गिरेरधः ॥१६३॥
मध्याह्नतपनात्युष्णरोचिस्तप्ते शिलातले ।
पिण्डवन्नवनीतस्य विलीनस्तत्क्षणादपि ॥ १६४॥ युग्मम्॥
शुभध्यानगतस्त्यक्त्वा तनुं योगीव शक्तिभाक् ।
अमर्द्धिवालयं चक्रे तच्चन्तरपरिग्रहम् ॥१६५॥
तस्मिन्देवाङ्गनासङ्गसुखमग्ने लसन्मुदः ।
त्रिदशाः पूजयामासुराशु तस्य कलेवरम् ॥१६६॥
श्रीवज्रं यतयो ऽप्यूचुः प्रेक्ष्यावतरतः सुरान् ।
किमत्रावतरन्त्येते देवाः सर्वर्द्धयः प्रभो ॥१६७॥
सो ऽप्यूचे क्षुल्लकः कार्यमिदानीं स्वमसाधयत् ।
महिमानं ततस्तस्य सुपर्वाणः प्रकुर्वते ॥१६८॥
श्रुत्वेति मुनयो दध्युः शिशुनाप्यमुना यदि ।
स्वकार्यं साधितं वृद्धाः साधयामस्ततो न किम् ॥१६९॥
इति संवेगिनः साधूंश्चारित्रज्ञानयोगिनः ।
आत्मीभूय तत्रैवं मिथ्यादृग्देवतावदत् ॥१७०॥
पारणं भवतामद्य भगवन्तः प्रसीदत ।
गृह्णीत शर्कराघोदमोदकं पानकं च नः ॥१७१॥
अन्नपदो ऽयं नैतस्याः प्रीतिहेतुस्ततो ऽन्यतः ।
यामो ध्यात्वेति ते जग्मुस्तदासन्नं नगान्तरम् ॥१७२॥

ज्ञात्वा मनसि तत्रत्यदेवतां साधवो व्यधुः ।
कायोत्सर्गं समागत्य नत्वा तानित्युवाच सा ॥१७३॥
अनुग्रहो ऽयमस्माकमिह यूयं यदागताः ।
न जातु जायते कल्पतरुर्मरुषु कर्हिचित् ॥१७४॥
त एवं तद्गिरा प्रीताः श्रीवज्रस्वामिना समम् ।
कृतानशनकर्माणः सत्कर्माणो ययुर्दिवम् ॥१७५॥
मत्वैतद्गोत्रभिद्गोत्रं तमागत्य रथस्थितः ।
सप्रमोदात्पूजयामास वज्रादीनां वपूंष्यथ ॥१७६॥
रथः प्रदक्षिणीचक्रे तं गिरिं सरथस्तदा ।
वृक्षादीन्नमयन्नुर्वीः स्वदेहमिव भक्तितः ॥१७७॥ युग्मम् ॥
विनम्रा एव ते ऽद्यापि विद्यन्ते तत्र पर्वते ।
यतस्तस्याभिधा जज्ञे रथावर्त इति क्षितौ ॥१७८॥
दुःकर्मावनिभृद्वज्रे श्रीवज्रे स्वर्गमीयुषि ।
विच्छिन्नं दशमं पूर्वं तुर्यं संहननं तदा ॥१७९॥
इतश्च शिष्यो वज्रर्षेर्वज्रसेनः परिभ्रमन् ।
पुरं श्रीभिरसम्प्राप्तपारं सोपारमीयिवान् ॥१८०॥
यथार्थनामा तत्रासीज्जितशत्रुर्महीपतिः ।
प्रिया च धारिणी तस्य समग्रगुणधारिणी ॥१८१॥
आसीच्च श्रावकस्तत्र जिनदत्ताभिधो धनी ।
तस्येश्वरीति विख्याता दयितोमापतेरिव ॥१८२॥

---

173 a C स्मृत्वा। c B पर्येत्सर्ग° C त्सर्ग°। 179 d C तुर्ये, A D मध्य।

सुधांशुधामधवलं सा शीलं तदशीलयत् ।
तस्या विश्वम्भरायास्तु यद्बभूव विभूषणम् ॥१८३॥
दुर्भिक्षदोषान्निःशेषं तदा च क्षितिमण्डलम् ।
जज्ञे धान्यैर्विनाम्भोभिर्मीनवद्दुःखसङ्कुलम् ॥१८४॥
धर्मप्रधाना सा बन्धून्निजानेवमथाभ्यधात् ।
जीवितास्मः सुखं तावदद्य यावदमी वयम् ॥१८५॥
विना धान्यक्रयाद्दुःखं जीवितास्मः कियच्चिरम् ।
तदद्य सविषं भोज्यमुपभुज्य समाहिताः ॥१८६॥
स्नानपञ्चनमस्काराः कृतानशनवृत्तयः ।
दुःखगेहस्य देहस्य सद्यस्त्यागं विदध्महे ॥१८७॥ युग्मम् ॥
अथेत्थं बन्धवो ऽशोचन्नस्त्वेवं हन्त साम्प्रतम् ।
गच्छतो ऽस्य शरीरस्य प्राप्तकालं फलं ह्यदः ॥१८८॥
पक्त्वाथान्नं लक्षमूल्यं सा यावन्नाक्षिपद्विषम् ।
वज्रसेनमुनिस्तावत्तज्जीवातुरिवागमत् ॥१८९॥
तमालोक्य मुनिं सापि हर्षादेव व्यचिन्तयत् ।
चित्तं वित्तं च पात्रं च दिष्ट्या पूर्णमिदं त्रयम् ॥१९०॥
दत्त्वा तदद्य पात्राय श्लाघ्यं जन्म करोम्यदः ।
कदाचिद्दैवयोगेन यदीदृक्पात्रसङ्गमः ॥१९१॥
हृष्टाय तस्मै विस्मेरचक्षुर्भिक्षामदत्त सा ।
लक्षमूल्यस्य पाकस्य वृत्तान्तं च न्यवेदयत् ॥१९२॥

---

189 a D पक्वान्नलक्षमूल्ये च ।

अथाख्यद्वज्रसेनो ऽपि मा स्वैवं प्रतिपद्यथाः ।
भद्रे सुभिक्षं यत्प्रातर्भविष्यति न संशयः ॥१९३॥
सापृच्छद्भवताज्ञायि स्वयमेतदुतान्यतः ।
अथोचे सो ऽप्यदो ऽम्भोदगर्जितोर्जितया गिरा ॥१९४॥
श्रीवज्रस्वामिनाभ्युक्तो यदा भिक्षां लभाप्नुयाः ।
लक्षपाकोदनात्प्रातः सुभिक्षं भविता तदा ॥१९५॥
इति श्रोत्रामृतं श्रुत्वा तद्दिनं क्षणमाचरत् ।
श्राविका सा सुदुर्भिक्षं क्षपयामास लीलया ॥१९६॥
प्रभाते च प्रभाजालैश्चण्डांशोरिव मण्डलम् ।
वहित्रचक्रमापूर्णं धान्यैर्दूरादथागमत् ॥१९७॥
जनः स्वच्छमनाः सा च ततः सद्यो ऽप्यजायत ।
कालं कंचन तत्रैव वज्रसेनो ऽप्यवास्थित ॥१९८॥
जिनदत्तः सहेश्वर्या सूनुभिर्वऽभिस्ततः ।
अर्चाञ्चक्रे जिनार्चायामर्थिभ्यो ऽर्थमदत्त च ॥१९९॥
महोत्सवेन ते ऽन्येद्युर्जगृहुः शान्तचेतसः ।
वज्रसेनमुनेः पार्श्वे लोकद्वयहितं व्रतम् ॥२००॥
एवं शिष्यप्रशिष्यादिशाखाभिर्वटवद्यतत् ।
श्रीवज्रस्वामिनो वंशः प्रसरन्व्यानशे दिशः ॥२०१॥
साधुरत्नः सुपर्वाढ्यो मुक्तारामनिबन्धनम् ।
श्रीमद्वज्रमुनेर्वंशः कस्य नाभीष्टमनोषितः ॥२०२॥

---

202 a D साधुवंश° ।

ये केचिन्नयनातिथित्वमगमन्ये वा श्रुतेर्गोचरं
वंशास्तेषु तनुत्वमग्रमभजन्मूलं पुनः स्थूलताम् ।
नव्यो ऽसौ दशपूर्विणो मुनिपतेः श्रीवज्रसूरेर्गुरो-
र्वंशो यः प्रथमं दधाति तनुतां स्फातिं पुरस्तात्पुनः ॥२०३॥

इत्याचार्यश्रीहेमचन्द्रविरचिते परिशिष्टपर्वणि स्थविरावलीचरिते महाकाव्ये आर्यरक्षितव्रतग्रहणपूर्वाधिगमवज्रस्वामिस्वर्गगमनतद्वंशविस्तारवर्णनो नाम त्रयोदशः सर्गः ॥

जम्बूमुनिप्रभृतिगणाधिनाथ-
पर्यन्तसाधुजनचित्रचरित्रपुष्पैः ।
स्रग्दामगुम्फितमिदं परिशिष्टपर्व
शिष्टात्मनां लुठतु कण्ठतटावनीषु ॥

॥ समाप्तो ऽयं ग्रन्थः ॥

---

## The four disciples of Bhadrabâhu.

(Uttar. Ṭikâ 2, 7) cf vi 5—21.

रायगिहे नयरे चत्तारि वयंसा वाणियगा सह वड्डिया। ते भद्दबाहुस्स अंतिए धम्मं सोच्चा पव्वइया। ते सुयं बहुयं अहिज्जित्ता दढचित्ता एगल्लविहारपडिमं पडिवन्ना। ते य समावत्तीए विहरंता पुणो वि रायगिहं नयरं संपत्ता। हेमंतो य तया वट्टइ। सो य(१)केरिसो।

वाइंति(२) दंतवीणं दरिद्दिणो जत्थ कंपिरसरीरा।
सव्वसिलीभूयजला जायंति सरा वि रयणीसु॥
जत्थ अइसीयमारुय- निहया सउणाइणो विणस्संति।
पुप्फफलदलसमिद्धा सुक्कंति दुमा वि सहस त्ति॥

ते य भिक्खायरियं काउं तइयाए पोरिसीए पडिनियत्ता। तेसिं च वेभारगिरिं तेणं गंतव्वं। तत्थेगस्स गिरिगुहादारे चरिमा पोरिसी ओगाढा। तत्थेव ठिओ। बीयस्स नयरुज्जाणे। तइयस्स उज्जाणसमीवे। चउत्थगस्स नयरासन्ने चेव। ते तत्थेव ठिया। तेसिं कप्पो एसो। जत्थ चरिमा पोरिसी ओगाहइ तत्थेव पडिमाए ठायव्वं। तत्थ जो गिरिगुहासन्ने तस्स(३) निरायं सीयं। सो गिरिमारुएण वेविरसरीरो वि मंदरो व्व निप्पकंपो सम्मं सहंतो(४) रयणीए पढमे चेव जामे कालगओ। उज्जाणत्थो बीए। उज्जाणसमीवत्थो तइए। जो नगरासन्ने(५) तस्स नयरुम्हाए(६) न तहा सीयं। तेण सो चउत्थे जामे कालगओ। सव्वे देवलोगे उववन्ना॥

एवं अन्नेहि वि सम्ममहियासेयव्वं जहा तेहिं अहियासियं॥

(१) B य। (२) B वायंत। (३) A सव्व। (४) A सपंतो। (५) A °सन्न। (६) A नयरन्हाए।

(Uttar. Tîkâ 2, 17) cf viii 1—159.

पुव्विं खिइपइट्ठियं नगरमासी। तओ उसभपुरं। तओ कुसग्गपुरं(१)। तओ रायगिहं। तओ चंपा। तओ पाडलिपुत्तं। तत्थत्थि नंदवंसे नवमो नंदराया। तस्सत्थि कप्पगवंससंभूओ उप्पत्तियाइचउव्विहबुद्धिसमिद्धो सगडालो मंती। इओ य वररुई नाम भट्टउत्तो। सो अणुदिवसं थुणइ रायाणं अउव्वेहिं अट्ठुत्तरसयपमाणेहिं चाडुयसिलोगेहिं(२)। तूसए(३) राया। पलोएइ सगडालमुहं। न य सो पसंसइ(४)। तओ न देइ किंपि राया। तओ वररुइणा अवगयपरमत्थेणं सगडालभज्जा ओलग्गिया(५)। जाव भणियं। तुमं सगडालं भणसु जेण पसंसइ मम पढियं। इयरीए वि दक्खिणपवन्नाए भणिओ सगडालो। तेण वि असुत्तमेयं(६) ति तहा वि उवरोहमावन्नेण पडिवन्नं। भणियं च सुभासियं ति दिन्ना करप्फोडिया। ताहे दिन्नं रन्ना दीणाराणमट्ठसयं। पच्छा दिणे दिणे पदिन्ने सगडालो चिंतेइ। निट्ठिओ रायकोसो त्ति। नंदं भणइ। भट्टारगा किं एयस्स तुब्भे देह॥ तुब्भे पसंसिओ त्ति॥ भणइ। अहं पसंसामि लोइयकव्वाणि अविणट्ठाणि॥ नंदराया भणइ। कहं लोइयकव्वाणि॥ सगडालो भणइ। मम धूयाओ जक्खा-जक्खदिन्ना-भूयदिन्ना-सेणा-वेणा-रेणाभिहाणाओ सव्व वि पढंति किमंग पुण अन्नो लोगो॥ तासिं च पढमा एक्कसिं सुयं गेण्हइ। बीया दोहि तइया तिहिं जाव सत्तमा सत्तहिं वाराहिं॥ तओ अन्नम्मि दिणे राइणा

(१) B कुसग्गं। (२) A मसी०। (३) B तूसिए। (४) A पसंसइ। (५) B संमिग्गया। (६) A कव्वम०।

आणावियाओ अंतेउरं। ठवियाओ जवणियंतरियाओ। आगओ वररुई। पढियाणि चाडुयाणि[1]। पच्छा जक्खाए राइणो आएसेण पढियाणि। बीयाए दोण्णि[2] वारा सुयाणि तइयाए तिण्णि वारा पढियाणि य। एवं सत्तण्ह वि। राइणा पत्तीयं। वररुइस्स दारं वारियं। इयरो वि *तमेव दीणारट्ठसयपोट्टलियं जंतं विउव्विय* गंगामज्झे ठवेइ[3]। किल कणगमए हत्थेण गंगा पयच्छइ। एवंविहेण विहाणेण पयडेइ अट्ठसयं जाव लोगो तं तारिसं पेच्छिय आउट्टो गंगा वि से देइ त्ति॥ सुया य राइणा[4] वत्ता। कहियं मंतिणो। जंतपओगेण जणमज्झे अलियपसिद्धं[5] करेइ त्ति णाऊण भणियं मंतिणा। जइ अम्ह पच्चक्खं देइ तो पत्तियामो। तओ संझाए पेसिओ पच्चइयगो[6] पुरिसो पच्छन्नं मंतिणा गंगं। वररुइणा वि *गंगं पुव्विऊण दिसावलोयं[7] काऊण ठविया जंते पोट्ट*लिया। गओ सट्ठाणं। इयरेण वि अवहरिऊण समप्पिया मंतिस्स। पभाए मंतिसहिओ सपुरजणवओ गओ गंगं राया। वररुइणा वि संथुया गंगा। आहयं हत्थेहिं पाएहि य जंतं। न किंचि लहइ। विलक्खीहूओ रायपुरओ दंभगो त्ति। निब्भच्छिओ राइणा। दंसिया मंतिणा पोट्टलिया। कहिओ सव्वावइयरो। हीलिओ लोगेहिं। पओसमावन्नो मंतिस्स वररुई छिद्दाणि[8] मग्गइ। पुच्छइ कोसल्लिउसमारद्धो गेहं। करेइ छिद्दाणि। न पडिवज्जइ[9] राया। अन्नया सिरियस्स वीवाहे रण्णो[10] आभोगो सज्जिज्जइ। वररुइणा णाउं

